| | |
|---|---|
| ❋ पुस्तकनाम | श्रावणीकर्मपद्धतिः |
| ❋ संकलकः, प्रकाशकश्च | रेवतीरमणसापकोटाः |
| ❋ संस्करणम् | प्रथमम् |
| ❋ प्रकाशितसंख्या | ५०१ प्रति |
| ❋ प्रकाशनदिवसः | ऋषितर्पणी २०७१ |
| ❋ प्रकाशकः | शर्मिला सापकोटा |
| ❋ © सर्वाधिकारः | संकलके सुरक्षितः |
| ❋ टङ्कणकर्ता | कोमलनेपालः |
| ❋ पुस्तकसज्जा | चिरञ्जीवी खतिवडाः |
| ❋ मूल्यम् | १३०/- |

## प्राप्तिस्थानानि

धार्मिक पुस्तक पसल, नारायणगढ

ममता पुस्तक पसल, देवघाट ९८४५१९९२२१

भोटाहिटी धार्मिक पुस्तक भण्डार, काठमाण्डौँ

लेखक निवास, शर्मिला सापकोटा, भ.न.पा.- कृष्णपुर

९८४५२७८११३ / ९८४५३६५१४७

# आशीर्वचन

वैदिक सत्य सनातन धर्मको बाटोमा हिँड्ने पथिकहरूका निम्ति वेद आस्था र विश्वासको मूल आधार हो। वैदिक धर्मको मूल मर्मलाई बुझ्न वेदको स्वशाखा, वेदका अंगहरू साथै वेदानुकूल स्मृति र धर्मशास्त्रहरूको अध्ययन गर्नुपर्दछ।

वेदमा वर्ण र आश्रमको व्यवस्था छ। **ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च** भन्ने भाष्यकार पतञ्जलिको भनाइअनुसार ब्राह्मण आफ्नो संस्कार, आचार र कर्तव्यमा नितान्त सावधान रहनुपर्छ। सबै प्राणीहरूमध्ये मनुष्य श्रेष्ठ भएझैं सबै वर्णहरूमा ब्राह्मण श्रेष्ठ भएको कुरा भगवान् शंकराचार्यले उल्लेख गर्नुभएको छ–

**जन्तूनां नरजन्मदुर्लभमतः पुस्त्वं ततो विप्रता** इत्यादि।

वास्तवमा ब्राह्मणले संस्कारबाट मात्र ब्राह्मणत्व प्राप्त गर्दछ। त्यसपछि शास्त्रोक्त कर्मको पालन गरी चित्तशुद्ध भएपछि जब उसले ब्रह्मज्ञान प्राप्त गर्दछ, तबमात्र पूर्णरूपमा उसको जीवन सफल हुन्छ।

यसै सन्दर्भमा ब्राह्मणहरूका लागि ऋषितर्पणीसम्बन्धी इतिकर्तव्यताका विषयमा श्री रेवतीरमणजीले श्रावणीपद्धति नामक पुस्तक तयार पार्नुभएको सुन्दा मलाई ज्यादै खुसी लागेको छ। यस अघि पनि उहाँले संस्काराचारदीपिका नामक पुस्तक प्रकाशित गर्नुभएको थियो। उहाँको संस्कृत भाषामा काव्यरचना गर्ने र संस्कार एवं सदाचारविषयक विविध ग्रन्थहरू लेख्ने अभिरुचि प्रशंसायोग्य छ।

ब्राह्मणहरूले आफ्ना कर्तव्यहरू भुल्न लागिसकेको वर्तमान अवस्थामा यस पुस्तक वैदिक सनातन धर्ममा विश्वास राख्ने ब्राह्मणहरूका निम्ति अवश्य नै कर्तव्य र कर्मको मार्गदर्शक बन्न सफल हुनेछ भन्ने अभिलाषाका साथ उहाँबाट शास्त्रीय विधिलाई अवलम्बन गर्ने अरू पनि महत्त्वपूर्ण ग्रन्थहरू प्रकाशित होऊन् भनी भगवान् विद्येश्वरसँग प्रार्थना गर्दछु।

हरि ॐ तत्सत्।

डा.स्वामी रामानन्द गिरि
महेश-संन्यास-आश्रम
देवघाट-२, तनहूँ

# शुभाशंसा

स्वधर्मनिष्ठः श्रीरेवतीरमणसार्पकौटः विविधशास्त्रीयविषयानवलोक्य श्रावणीस्नानविधिं व्यरीरचदित्याकर्ण्य मोमुद्यते मदीयं चेतः । एतेन सङ्कलितेऽस्मिन् ग्रन्थे स्वपरम्परया सम्प्राप्ता अथ च विविधपुस्तकेषु समुल्लिखिताः विषयाश्च संगृहीता दृश्यन्ते । कार्याकार्यव्यवस्थायां शास्त्रवचनमेवास्माकं प्रमाणम् । उक्तञ्च श्रीकृष्णेन–

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥**

विशेषतः ब्राह्मणत्वं वेदाध्ययनेनैव सुरक्षितं भवति । ब्राह्मणत्वस्य रक्षणेनैव सुरक्षितो भवति वैदिको धर्म इत्याचार्याः समामनन्ति । ब्राह्मणत्वरक्षायै तदनुकूलमाचरणमपरिहार्यम् । तदर्थं ब्राह्मणेन वेदाध्ययनाङ्गतया उत्सर्गोपाकर्मादिकर्माणि यथाविधि सम्पादनीयानि । तदर्थं आह्निककर्मसूत्रावलिप्रभृतिपुस्तकानि सहायकत्वेन स्वीक्रियन्ते वाजसनेयसूत्रानुसारिभिः । तत्र श्रीमता रेवतीरमणसार्पकौटमहोदयेन विविधपुस्तकान्यवलोक्य स्वमनीषया निर्णीता विषयाः पुस्तकेऽस्मिन् समाविष्टाः सन्ति । तर्पणविधावाब्रह्मस्तम्बपर्यन्तं जगत् तृप्यतु इति वचनमुच्चार्यते सर्वैः । तत्तात्पर्यमनुसृत्य संगृहीतानि बहूनि तर्पणवचनानि प्रकृतविधौ समाविष्टानि सन्ति, एतेषां मूलं मृग्यमिति मे मनीषा ।

महेशसंस्कृतगुरुकुलाध्यापकचरेण श्रीरेवतीरमणसार्पकौटमहोदयेन सङ्कलितोऽयं ग्रन्थः श्रद्धालूनां कृते महदुपकारकं स्यादिति कामये । एवञ्च स्वधर्मनिष्णातैरीदृशैर्विद्वद्भिः प्राचीनकालत नेपालदेशे सुरक्षितं वैदिकधर्मचर्यापारम्पर्यं चिरकालपर्यन्तं सुरक्षितं भूयादिति भवानीजानिं भूतनाथं विद्येश्वरमभ्यर्थये ।

डा.गुरुप्रसाद सुवेदी
प्राचार्य
महेश-संस्कृत-गुरुकुल-विद्यापीठम्
देवघाट-२, तनहूँ

# *हार्दिक शुभकामना*

धार्मिक र सांस्कृतिक अध्ययन एवम् अनुसन्धानमा रुचि राख्ने विद्वान् गुरु पं. रेवतीरमण सापकोटाले श्रावणीकर्मपद्धति नामक पुनः अर्को पुस्तक प्रकाशमा ल्याउन लाग्नुभएको कुराले मलाई निकै प्रसन्नताको अनुभूति भएको छ । उहाँले यसअघि पनि यस्तै किसिमका पुस्तकहरू प्रकाशनमा ल्याएर हाम्रो सनातन हिन्दुधर्म र संस्कृतिको संरक्षण तथा संवर्द्धनमा आफ्नो तर्फबाट यथाशक्य योगदान दिँदै आउनुभएको कुरा अत्यन्त प्रशंसनीय छ ।

ऋषितर्पणीलाई हाम्रो नेपाली समाजमा श्रावणी वा जनैपूर्णिमा पनि भनिन्छ । श्रावणीमा मुख्यतः स्नान, तर्पण र ऋषिपूजन गरी नवीन यज्ञोपवीत धारण गर्नाले क्रमशः हाम्रो शरीर, मन र आत्माको शुद्धि हुन्छ । ऋषितर्पणी वा श्रावणीको मुख्य उद्देश्य भन्नु नै हामीलाई बाह्य र आन्तरिकरूपमा निर्मल बनाउनु हो ।

जबसम्म हामीहरू बाह्य र आन्तरिकरूपमा आ-आफ्ना आचरणहरूलाई शुद्ध गर्न सक्दैनौँ, तबसम्म हाम्रो समाज र राष्ट्र पनि शुद्ध हुन सक्दैन । यस किसिमको शुद्धीकरणको अभियानमा लागिरहन र आगामी दिनमा पनि यस्तै महत्त्वपूर्ण पुस्तकहरू प्रकाशमा ल्याएर हिन्दु धर्म र संस्कृतिको संरक्षण तथा संवर्द्धनमा उहाँलाई संलग्न भइरहने इच्छाशक्ति र कर्मशक्ति निरन्तर प्राप्त भइरहोस् भन्ने हार्दिक शुभकामना व्यक्त गर्दछु ।

२०७१ वैशाख १६
मातातीर्थ औँशी

चन्द्रमणि शास्त्री (शुक्लयजुर्वेदाचार्य)
शास्त्री निकेतन वैदिक कुञ्ज
गैँडाकोट-२, शिलान्यास, नवलपरासी
मो.नं. ९८४५०७७८०१

# कृतज्ञता-ज्ञापनम्

सौजन्यता विकसिता सुभवाटिकाया-
सौगन्ध्यपूर्णमिव चित्रितशाटिकायाम् ।
सौभाग्यसिञ्चितमिदं सुमनःप्रफुल्लं
सर्वत्र वासितमहो ! चिरजीविनोऽलम् ॥१॥

उद्दीपिता ननु परोपकृतिः प्रसिद्धा
सद्योऽभिजातकुलसंस्कृतिजा समिद्धा ।
शङ्कां प्रवर्णितुमहो ! चरितं न यस्य
शेषोऽपि नालमिह कोऽनुवदेन्मनुष्यः ॥२॥

भ्रात्राऽनुप्रेरित इलासुर उत्तमेन
स्वाध्यायनिष्ठ इतरेतर एधितश्रीः ।
यो भ्रातृभक्त उत सन्नतिमान् स्वपित्रोः
सद्धर्मसंस्कृतगुरोश्चरणानुगश्च ॥३॥

वाग्देवता तव मुखाम्बुरुहे प्रविष्टा
सद्वाग्विलासचतुरा हृदि सन्निविष्टा ।
श्रेयस्तनोतु सततं ह्यविरामशून्या
लक्ष्मीस्तनोतु सततं श्रियमार्तिहीना ॥४॥

सम्पादितञ्च सहसा सहयोगमेऽद्धा
सौहार्दभावमवलम्ब्य मयि त्वयाऽद्धा ।
कीर्तिश्च ते वितिमिरा स्मरणीमिद्धा
भूयादजस्रमजरामरिता प्रवृद्धा ॥५॥

उट्टङ्कितं यदिह पुस्तकमेव मेऽद्धा
सौहार्दभावमुररीकृतवान् त्वयाद्य ।
कार्यञ्च तेऽभवदविस्मरणीयमद्धा
स्वप्नेऽपि विस्मृतिरहो न भवेत्कदाद्धा ॥६॥

भ्राता त्वयाऽधिगत उत्तम इद्धप्रज्ञः
सौजन्य भूषण उदात्तचरित्र ऐशः ।

तस्यानुजस्त्वमसि तच्चरितानुवर्ती
सत्कीर्तिमान् विजयतामजरामरत्वम् ॥७॥

वृद्धानुसेवनमहो तव सत्यवृत्तेः
सद्भूषणं प्रथितमेव सदा सुकीर्तेः ।
यत्सदृणं मयि सदा चिरजीविनस्ते
तीर्त्वा न शक्यत इहात्मजनौ कदाद्धा ॥८॥

किं स्वर्पये नु तव सत्कृतये मनोज्ञं
किं स्वर्हणीयमिह चास्ति सुमाङ्गलीयम् ।
श्रद्धामृते त्वयि किमस्ति समर्हणीयं
श्रद्धान्विते मयि सदोपकृतैः सुकृत्यैः ॥९॥

यन्मुद्रणस्य विषये नु कृतज्ञतान्ते
सत्छ्रद्धया प्रकटिता च मया मुदा वै ।
सा धन्यवादसहिता महतीयकृत्ये
विद्वद्वरे हि प्रियवादिनि शान्तवृत्ते ॥१०॥

प्रस्तौमि चात्र महितां हि गुणज्ञतान्ते
सच्छ्रद्धयाऽकलुषितां सहसा गुणज्ञे ।
तुष्टे त्वयि ह्यनृषणतां सततं गमिष्ये
सत्साधुवादममलं सततं करिष्ये ॥११॥

श्रीरामचन्द्रगुरवोऽपि समर्हणीयाः
सच्छ्रद्धया सततमेव प्रशंसनीयाः ।
स्वाशीभिरत्रमहितं समलङ्कृतं वै
मन्ये च पुस्तकमिदं मम सत्प्रयासम् ॥१२॥

शश्वद्धि सन्ति गुरवो हि दयालवो मे
एतद्धि कर्म महतां महनीयमस्ति ।
निःस्वार्थितं समदृशां सुमनश्चरित्रं
सौगन्ध्यवासितमहो ! जयतेतरां हि ॥१३॥

# विषयसूची

# स्वाभिमतम्

ॐ तत्सत् ब्रह्मणे नमः ।

**ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥**

-श्रीमद्भगवद्गीता

श्रद्धेय सज्जनवृन्द !

श्रूयतां समीक्षतामवधार्यताञ्च । जातिशतेषु लभते भुवि मानुषत्वं तत्रापि दुर्लभतरं खलु भो द्विजत्वम् । **यस्तन्न पालयति लालयतीन्द्रियाणि, तस्यामृतं क्षरति हस्तगतं प्रमादात् ।** एतद्ध्रुवसत्यमेव । जन्मजन्मान्तरीयपुण्यसञ्चयेनास्माभिः पुण्यमयभारतवर्षभूमौ सद्ब्राह्मणकुले ब्राह्मणत्वेनोत्कृष्टजन्मावापि । अयं परमसौ भाग्यावसरः । कथनमस्ति यद्– **गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारत-भूमिभागे ।** अस्माकं पूर्वजैर्महर्षिभिर्ब्रह्मत्वबलेन चकितचकितीकृता त्रिलोकी । कुलगुरुणा महर्षिणा वसिष्ठेन ब्रह्मवर्चसैव प्रभावशाली विश्वामित्रः परास्तः । आत्मसात्कृतेन ब्रह्मत्वबलेनैव महर्षिणा विश्वामित्रेण नूतनसृष्टिं विधाय सर्वे देवाः परास्ताः । ब्रह्मवर्चः सहितेन स्वतपोबलेन राक्षसत्वे परिणतं त्रिशङ्कुं चाण्डालशरीरेण जीवन्तमेवा स्वर्गे स्थापितवान् विश्वामित्रः । अतोऽधिकं ब्रवाण्यहं जगत्स्रष्ट्रा विरञ्चिनापि ब्रह्मत्वबलेनैव सृष्टिः सम्पादिताञ्जसैव । ब्रह्मत्वबलेनैव ब्राह्मणः परमात्मना परमुक्तेर्द्वारि पूर्णाधिकारित्वेन स्थापितः । जन्मना शूद्रतां गतो ब्राह्मणः संस्काराचारबलेन तपोबलेन च किं किं न करोत्यद्भूतं कर्म । मुखबाहूरुपजानां मध्ये परमात्मनो मुखजन्मत्वेन वैदिकसंस्काराचारबलेन च सर्वश्रेष्ठतमो वर्तते । अतो विधात्रापि सम्पूर्ण चराचरस्य जगतः परमाधिकारित्वेन नियुक्तः । अतः कथ्यते यत्–

**ब्राह्मणस्यैव सर्वस्वं यत्किञ्चित् जगति गतम् ।**
**सृष्टेनाभिजनेनेदं ब्राह्मणोऽर्हेचि चाखिलम् ॥**
**स्वकीयं ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।**
**ब्राह्मणस्यानुग्रहतो भुञ्जते क्षत्रियादयः ॥**
**वैशे स्यात् प्रकृतिश्रेष्ठ्यान्नियमस्य च धारणात् ।**

**असंस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः ।**

**-मनुस्मृतिः....**

तथापि साम्प्रतिकसमये वेदानामनभ्यासेन स्वाचारस्य च वर्जनादालस्यतोऽन्नस्य च दूषणाच्च ब्रह्मवर्चोभिर्हीना ब्रह्मत्वाचाररहिताः सन्तः प्रायः कालमृत्युग्रस्ता विद्याबुद्धिवर्जिताः सन्ति । सर्वे परवशा धनलोलुपतया श्ववृत्तिमास्थिताः सन्ति । बहुपारिवारिकत्वेन निरुद्यमेन च वृत्तिकर्षिताः म्लेच्छदेशानुयायिनः प्रायशो लभ्यन्ते । केचन सर्वकाराधिकारपदे नियुक्ता भृत्या जीवन्ति । केचन वाणिज्यमाश्रिताः, केचन शिल्पकाराः, केचन सूपकारा औदनिकाः सन्ति । केचन देवलाः, कृषीवलाः, पशुपालकाः सन्ति । केचन ग्रामयाजिनः, शूद्रप्रतिग्रहिणः पौरोहित्येन जीवन्ति । केचन पल्लवग्राहिपाण्डित्याः कथावाचनेन विटनटवेषण, लोकगीतगायनेन, नर्तनेन च लोकान् रञ्जयित्वा धनार्जनं कुर्वन्ति । केचनाऽद्वैताभिधानेन द्वैतं व्यवहार्यमाणाः शूद्राचार्याः जनान् वेदान्तप्रवचनेन दिग्भ्रमितान् कुर्वन्ति । केचनान्ये विविधोपधर्मेषु, विधर्मेषु, साम्प्रदायिकेषु संलग्नाः सन्तो वैदिकसनातनीयधर्मिणो जनान् विविधप्रलोभनेन स्वसम्प्रदायेष्वाकर्षन्ति । केचन श्रमजीविनः श्रमिकाः श्रमविक्रयेण जीवन्ति । केचन वर्णाश्रमधर्मानतिक्रम्य परमार्थसाधन-व्याजेन शिखासूत्रकर्तनं विधाय यतिवेषं सन्धार्य मठाधिपत्वे नियुक्ताः । अष्टोत्तरसहस्रश्रीकस्वामिपदभाजो यतिसाम्राज्यपदं संस्थाप्य वेदान्त-प्रवचनमिषेण स्वप्रभुत्वं स्थापयन्ति । केऽपि वर्णाश्रमिणो जनाः स्ववर्णाश्रमाचारसंस्कारान् प्रति नेत्रे निमील्य यथेष्टाचारविहारं कुर्वन्ति । इत्थं धर्मसंकटसंक्रमितसमये स्ववर्णाश्रमधर्मानुचरणे वर्तिनो जनाः के के कति कति सन्तीति समन्वेषणे कराङ्गुलिषु गणनायां कृतायां सत्यामप्यपर्याप्ता एव सन्ति । कीयन्तो जनाः स्वकर्तव्यानुशासने सूत्रवदाचरणशीलाः लभ्यन्ते । यद्यपि साम्प्रतिकपरिवेशे ये केऽपि स्वधर्मकृत्यपरायणाः सन्ति । तेऽपि परिस्थितिपरिवेशाः सूत्रात् सूत्रतराणि कर्माणि कुर्वन्तः सन्ति । तथापि महान्ति यज्ञसाधनानि विधाय स्वब्रह्मत्वं ब्रह्मसूत्रे सूत्रवदाचरितं वर्तते । अस्माकं ब्रह्मसूत्रेऽस्मिन् वस्तुतोऽर्थतो ज्ञातुं प्रयत्ने कृते सति पूर्वै-र्महर्षिभिर्विद्वद्भिश्च समर्थितानि समर्हितानि च कीयन्ति ब्रह्माण्डतत्त्वानि ब्रह्मसूत्रात्मकानि दृश्यन्ते । तानि तत्त्वानि ब्रह्मसूत्रेषु केन प्रकारेण केन विधिना स्थाप्यन्ते, पूज्यन्ते । ब्रह्मसूत्राणि कथमभिमन्त्रणं क्रियन्ते । तेषां संरक्षणानि केन प्रकारेण क्रियन्ते । कथं तेभ्योऽस्माकं ब्रह्म-

वर्चोऽभिरक्ष्यते । अस्माकं समक्षमेव सम्यग्विचारणीयसमस्याविषयो वरीवर्ति । साम्प्रतिके समये तु ब्रह्मसूत्राण्यपि विधिनिर्मितानि न प्राप्यन्ते । आपणेऽन्त्यजैर्निर्मितानि यज्ञसूत्राभिधानि लभ्यन्ते । अधिकांशब्राह्मण-ब्रूवाः ब्रह्मसूत्रं स्वयंविधिना नोत्पाद्यापणात् क्रीत्वानयन्ति, तान्येव धारयन्ति च । तेष्वभिमन्त्रणेन का शक्तिरुत्पद्यते । तैः सार्धं विधिनिर्मितानि ब्रह्मसूत्राणि कथमेकत्र सम्मेल्यन्ते ? किं शूद्रीगर्भजाता, ब्राह्मणीगर्भ-जाता, अन्त्यजागर्भजाता वटव एकस्मिन् यज्ञे संस्कर्तुं योग्या भवन्ति ? किं शूद्रादिजातानां ब्रह्मसंस्कारं कर्तुमधिकारो वर्तते ? ये केचन ग्रामयाजिनः शूद्रयाजिनश्चात्मानं पण्डितं मन्याः पौरोहित्येन प्रतिग्रहजीविनो द्विजबन्धवोऽधुनातनपरिवेशे तु शूद्रेभ्योऽन्त्यजेभ्यश्च पूर्वमेव दक्षिणामप्रत्यक्षरूपेण संगृह्य तेषां यज्ञसूत्राभिधानि सूत्राणि स्वयञ्चादाया-त्मयज्ञसूत्रेषु सम्मेल्य सत्वराभिमन्त्रणं कृत्वा पलायन्ते । स्वगृहं गत्वा रहस्येव तेभ्यो पूर्वोक्तानि यज्ञसूत्राणि, रक्षासूत्राणि च प्रदीयन्ते । हा कष्टं ! कष्टमिदं भो कष्टम् !

ब्रह्मसूत्ररक्षासूत्राभिमन्त्रणविषयेऽपि विचारयितव्यमस्ति । केचन महानुभावा आह्निकसूत्रावल्याविधानेन केवलऋषिपूजनतर्पणेनैव यज्ञसूत्राण्यभिमन्त्रयन्ति । केचनाऽतिसंक्षेपितान्यपाङ्गानि विधानानि क्रीत्वानीयाभिमन्त्रयन्ति । केचनपूर्वाचार्यैर्लिखितानि न मुद्रितानि परन्त्वपर्याप्तानि विधानानि समानीयाभिमन्त्रयन्ति । अतः सर्वैर्ब्रह्मत्व-पक्षपातिभिर्विद्वद्भिरस्मिन् विषये विचारणीयमेवास्ति ।

क्षम्यतामयि ! सद्विद्वांसो गुरवः सज्जनमहानुभावाश्च । घुणाक्षरावलम्बितेन स्वल्पज्ञेन मया विविधविद्वद्वर्यैर्गुरुजनैः प्रस्तुतपत्रिकासु पुस्तकेषु विविधैः पूर्वैर्महर्षिभिः प्रणीतेषु पुस्तेकेषु, विविधपुराणेषु ग्रन्थेषु समुल्लिखितानि प्रमाणानि समवलम्ब्य अध्ययनं कृत्वानिवार्योपगितान्यङ्गानि यथासम्भवं यथाशक्ति पूरयित्वा ऋष्यादिब्रह्माण्डतत्त्वानां पूजनतर्पणब्रह्मसूत्राभिमन्त्रणार्थ-मृषितर्पणि चेत्यभिधाना श्रावणीपद्धतिः संगृहीताः सम्पादिता च वरीवर्ति । अतो भवद्भिः सर्वैरिमां पद्धतिमवलम्ब्यानेन विधिना ऋष्यादिपूजनतर्पणे-नाभिमन्त्र्य ब्रह्मसूत्राणि सन्धार्य स्नानसन्ध्यादि ब्रह्मकार्याणि सम्पादितानि भवेयुरित्याशासे किमलं विस्तरेण ? ।

**–रेवतीरमण उपाध्यायः(सार्पकौटः) लमजुङ्गः ।**

# तत्रादौ प्रातःस्नानविधिः

ब्राह्मे मुहूर्ते शयनादुत्थाय **ॐ नमो नारायणाय** इत्यष्टाक्षरमन्त्रोच्चारणपूर्वकं प्रातःस्मरणं विधाय शौचादिनियमान् कृत्वा स्नानप्रसङ्गे स्नानात्प्रागेव प्रस्थानसमये शुभ्रां शुद्धां यथादेशसम्भवां वार्दां मृदम्, गोमयम्, कुशान्, तिलाक्षतान्, सुरभीणि, विविधानि पुष्पाणि, अपामार्गमञ्जरी, दूर्वाङ्कुराणि, भस्म च संगृह्य नद्यादौ तीर्थजलेऽन्यज्जलाशयेऽशक्तौ गृहे वा प्रथमतः पूर्वाभिमुखो भूत्वा शिलासने दारुजासने वोपविश्यादौ हस्तौ पादौ प्रक्षाल्य गण्डूषत्रयं कुर्यात् । पश्चादञ्जलौ कुशखण्डत्रयसहितं जलमादाय स्नानार्थं सामान्यसंकल्पं तथोपार्कादिविशेषावस्थायान्तु परिस्थितिरनुकूलाभवेच्चेन्महासंकल्पमपि कुर्यात् । सामान्यसंकल्पो यथा–

हरिः ॐ तत्सदिति त्रिरुच्चार्य विष्णुः ३ **ॐ नमो भगवते पुराणपुरुषोत्तमाय**। अद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलचराचर जगतः सृष्टिकारिणो ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतकल्पादारभ्ये वाराहकल्पे वैवस्वतमन्वन्तरे बौद्धावतारे सत्यादिचगुर्युगिनां मध्ये अष्टाविंशतितमे कलियुगे तस्य प्रथमे चरणे सकलजगतो द्वीपानां मध्ये जम्बूद्वीपे वर्षप्रवराणां मध्ये भारतवर्षे हिमवद्विन्ध्ययोर्मध्ये आर्यावर्तान्तर्गतसरस्वतीदृषद्वत्योरन्तराले ब्रह्मावर्तैकदेशेऽन्तर्वेद्यां श्रीमद्विष्णुप्रजापतिक्षेत्रे श्रीगङ्गादेव्या उत्तरदिशि माहेन्द्रीमध्ये नेपालराज्यान्तर्गतेऽमुकमण्डले महर्षिनन्दिन्याः कर्मदाया वा नारायण्या वा निकटेऽमुकतीर्थेऽमुकक्षेत्रेऽमुकग्रामे वा इह पुण्यभूमौ षष्ठिसंवत्सराणां मध्ये बार्हस्पत्यमानेनामुकसंवत्सरे विक्रमांशकेऽमुकवर्षेऽमुकायनेऽमुकर्तौ सौरभानेनामुकमासे चान्द्रमानेनामुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुकराशिस्थिते सवितरि(अमुकराशिस्थिते चन्द्रमसि) अमुकराशिस्थिते देवगुरौ तथा चान्येषु शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगणनक्षत्रयोगकरणलग्नमुहूर्तविशेषेण विशिष्टायां शुभपुण्यतिथौ चाद्यामुकगोत्रोत्पन्नोऽमुकप्रवरान्वितः शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनीयवाजसनेयशाखाध्यायी सपत्निकः सपुत्रपौत्रादिकः सबन्धुवर्गादिकोऽमुकराशिशरीरोऽमुकनामशर्माहं ममात्मनः श्रुतिस्मृतिपुराणागमोक्तानुसारं श्रीमत्परमेश्वरप्रीत्यर्थं शीतेनोष्णेन वा शास्त्रीयविधानेन यथाशक्ति प्रातः-

स्नानमहङ्करिष्ये । इति संकल्प्य–

## *तीर्थप्रार्थना*

ॐ आपो नारायणोद्भूतास्ता एवास्यायनं पुनः ।
तस्मान्नारायणं देवं स्नानकाले स्मराम्यहम् ॥
त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ।
याचितं देहि मे तीर्थं तीर्थराज नमोऽस्तु ते ॥
नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् ।
भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥
पुष्करादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धो काबेरि जलेऽस्मिन् सन्निधिं कुरु ॥
नन्दिनी नलिनी सीता मालती च मलापहा ।
विष्णुपादाब्जसम्भूता गङ्गा त्रिपथगामिनी ॥
भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी ।
द्वादशैतानि नामानि यत्र यत्र जलाशये ॥
स्नानोद्यतः पठेद्यस्तु तत्रैव निवसाम्यहम् ।
एतान् मन्त्रान् पठित्वान्ते सर्वाङ्गस्नानमाचरेत् ॥
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥
सुप्रभा काञ्चनाक्षी च विशाला च मनोरमा ।
सरस्वती चौघवती सुरेणुर्निर्मलोदका ॥
किरणा धूतपापा च पुण्यतोया सरस्वती ।
गङ्गा च यमुना चैव पञ्चनद्यः पुनन्तु माम् ॥
जाह्नवी वृद्धगंगा च कालिन्दी च सरस्वती ।
काबेरी नर्मदा वेणी सप्तगङ्गाः पुनन्तु माम् ॥

एवं स्नायात् । यदि नद्यादौ तीर्थे वा स्नातुं गतस्तदा प्रार्थनानन्तरं–

## तीर्थाभिमन्त्रणम्

**ॐ उरु ꣳ हि राजा वरुणश्चकारसूर्यायपन्थामन्वेतवाऽउ । अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् । नमो वरुणा याभिष्ठितो वरुणस्य पाशः ॥** इति मन्त्रेण न्यूब्जाञ्जलिहस्तेन तोयमभिमन्त्रयेत् ।

## जलावर्तनम्

**ॐ ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः ॥**

## पूर्णाञ्जलिनापोग्रहणम्-

**ॐ सुमित्रियानऽआपऽओषधयः सन्तु** इति मन्त्रेण जलाञ्जलिं गृह्णीयात् ।

## तीर्थतटे जलप्रक्षेपणम्

**दुर्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टियञ्ज वयं द्विष्मः ॥**

## मृत्तिकालेपनम्

ॐ इदं विष्णुर्विचक्रमे त्रेधानिदधे पदम् । समूढमस्य पा ꣳ सुरे स्वाहा ॥

**ॐ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।**
**मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥**
**उद्धृतासि वराहेण कृष्णेन शतबाहुना ।**
**नमस्ते सर्वभूतानां प्रभवारणि सुव्रते ॥**
**मृत्तिके ब्रह्मभूतासि कश्यपेनाभिवन्दिता ।**
**त्वया हतेन पापेन गच्छामि परमां गतिम् ॥**

इति सम्प्रार्थ्य नाभिदघ्नं तीर्थजलं प्रविश्य सूर्याभिमुखे स्थित्वा स्नायात् । तत्र मन्त्रः–

**ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।**

**विश्व ँ हिरिप्रम्प्रवहन्तिदेवीः ।** इति मन्त्रेण निमज्य पुनः **ॐ उदिदाभ्यः शुचिरापूतऽएमि** इति मन्त्रेण द्वितीयवारं पुनस्तूर्ष्णीं निमज्योन्मज्याचामेत् । पुनस्तूर्ष्णीं त्रिवारं निमज्योन्मज्याचामेत् ।

## गोपयोपलेपनम्

**ॐ अग्रमग्रं चरन्तीनामोषधीनां वने वने ।**
**तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥**
**यन्मे रोगं च शोकं च तन्मे दहतु गोमयम् ॥**

इति मन्त्रेण गोमयमभिमन्त्र्य–

**ॐ मानस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः । मा नो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।**

## भस्मलेपनम्

**ॐ अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, स्थलमिति भस्म, व्योमेति भस्म । सर्व ँ ह वा इदं भस्म । मन एतानि चक्षूंषि भस्मानि ।**

**ॐ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । स ँ सृज्य मातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ।(इति क्षेपकम्)**

## कुशोदकेन मार्जनम्

**ॐ इमम्मे वरुणश्रुधी हवमद्या च मृडय । त्वामवस्युराचके ॥**

**ॐ तत्त्वायामिब्रह्मणा वन्दमानस्तदाशास्ते यजमानोहविर्भिः । अहेडमानो वरुणेह बोध्युरुश ँ स मा नऽआयुः प्रमोषीः ।**

**ॐ सत्त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषा ँ सिप्रमुमुग्ध्यस्मत् ॥**

**ॐ सत्त्वन्नोऽअग्नेवमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्व नो वरुण ँ रराणो वीहि मृडीक ँसुहवो नऽएधि ॥**

**ॐ मापो मौषधीर्हि ँ सीर्धाम्नो धाम्नो राजँस्ततो वरुण नो मुञ्च ।**

यदाहुरघ्न्याऽइति वरुणेति शपामहे ततो वरुण नो मुञ्च ।

ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यम ꣳ श्रथाय । अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥

ॐ मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वी शात्सर्वस्माद्देव किल्विषात् ॥

ॐ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमे नोयासिषमव मर्त्यैमर्त्यकृतं पुरुराब्णो देव रिषस्पाहि ॥

इत्यादिभिर्मन्त्रैः सर्वाङ्गानि मार्जयित्वा पश्चात्तूर्ष्णीं स्नात्वाऽऽचम्य पुनर्दर्भैर्मार्जनम् ।

ॐ आपो हिष्ठा मयोभुवस्तानऽ उर्जे दधातन । महे रणाय चक्षसे ।

ॐ योवः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिव मातरः ॥

ॐ तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

ॐ इदमापः प्रवहतावद्यञ्च मलञ्च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपेऽअभीरुणम् । आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ॥

ॐ हविष्मतीरिमाऽ आपोहविष्माँ २ आविवासति । हविष्मान्देवोऽअध्वरो हविष्माँऽअस्तु सूर्यः ॥

ॐ देवीरापोऽअपान्नपाद्यो वऽऊर्मिर्हविष्यइन्द्रियावान्मदिन्तमः । तन्देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भागस्थ स्वाहा ॥

ॐ कार्षिरसि समुद्रस्य त्वाक्षित्याऽउन्नयामि । समापोऽअद्भिरग्मत समोषधीभिरोषधीः ॥

ॐ अपो देवा मधुमतीरगृभ्णन्नूर्ज्जस्वती राजस्वश्चिताना: । याभिर्मित्रावरुणवभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥

ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतं पवित्रेणे वाज्यमापः शुन्धन्तु मैनसः ॥

ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥

ॐ अपा ꣹ रसमुद्वयस ꣹सूर्ये सन्त समाहितम् । अपा ꣹ रसस्य यो रसस्तम्वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वा ।

जुष्टङ्गृह्णाम्येष ते योनिरिन्द्रायत्वा जुष्टतमम् ॥

ॐ अपो देवीरुपसृज मधुमतीरयक्ष्माया प्रजाभ्यः ।

तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥

ॐ पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा ॥

ॐ पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्णवै ।

ॐ अग्नऽआयू ꣹ षिपवसऽआसुवोर्जमिषञ्च नः । आरे बाधस्व दुच्छुनाम् ॥

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥

ॐ पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत् । अग्ने क्रत्वा क्रतूँ २रनु ॥

ॐ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा ॥

ॐ पवमानासोऽअद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥

ॐ उभाभ्यां देवसवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ।

ॐ वैश्वदेवी पुनती देव्यागाद्यस्माभिमा वह्व्यस्तन्वो वीतपृष्ठाः । तया मदन्तः सधमादेषु वय ꣹स्याम पतयो रयीणाम् ॥

इत्यादिभिर्मन्त्रैमार्जयित्वा पश्चादुदकं स्पृशेत् । ततः–

ॐ चित्पतिर्मा पुनातु देवो मा सवितापुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुन तच्छकेयम् ॥ इति मन्त्रेण नाभेरूर्ध्वं मार्जयेत् ।

ॐ वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुन तच्छकेयम् ॥ इति

**मन्त्रेण नाभेरधो मार्जयेत् ।**

**ॐ देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुन तच्छकेयम् ॥** इति मन्त्रेण सर्वाङ्गे मार्जयेत् । ॐ पुनातु ॥

**ॐ इमम्मे वरुणश्रुधी हवमद्या च मुडय । त्वामवस्युराचके ॥ इति मन्त्रेण**—ॐ भूः पुनातु ॥

**ॐ तत्त्वायामिब्रह्मणा वन्दमानस्तदाशास्ते यजमानोहविर्भिः । अहेडमानो वरुणेह बोध्युरुश ँ स मा नऽआयुः प्रमोषीः ॥ इति मन्त्रेण**—भुवः पुनातु ।

**ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमल शोशुचानो विश्वा द्वेषा ँ सि प्रमुमुग्ध्यस्मत् ॥ इति मन्त्रेण**—ॐ स्वः पुनातु ।

**ॐ सत्वन्नोऽअग्नेवमो भवोतीनेदिष्ठोऽअस्याऽउषसो व्युष्टौ ।**
**अवयक्ष्य नो वरुण रराणो वीहि मृडीक ँसुहवो नऽएधि ॥**
**इति मन्त्रेण**—ॐ महः पुनातु ।

**ॐ मापोमौषधीर्हिँसीर्धाम्नोधाम्नो राजँस्ततो वरुण नो मुञ्च । यदाहुरघ्न्याऽइति वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ इति मन्त्रेण**—ॐ जनः पुनातु ।

**ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यम ँ श्रथाय । अथावयमादित्यव्रते तवानागसोऽअदितये स्याम ॥ इति मन्त्रेण**—ॐ सत्यं पुनातु ।

**ॐ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोयासिषमव मर्त्यैमर्त्यकृतं पुरुराब्णो देव रिषस्पाहि ॥ इति मन्त्रेण**—ॐ ऊर्ध्वं पुनातु ।

**ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ इति मन्त्रेण**—ॐ सर्वं पुनातु । इति कुशैः मार्जयित्वा

## *अपामार्गेण मार्जनम्*

**ॐ अपाघमप किल्बिषमप कृत्यामपो रघः । अपामार्ग त्वमस्मदपदुः ष्वप्न्य ँ सुव ।** इति मन्त्रेणापामार्गैः स्त्रिभिर्मार्जयेत् । ततः-

## *दूर्वाङ्कुरेण मार्जनम्*

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ इति मन्त्रेण दूर्वादिभि-स्त्रिभिर्मार्जयेत् ।**

## *अथाघमर्षणम्*

ततो वक्ष्माणषट्पक्षाणामन्यतमेना(एकेन)न्तर्जलेमग्नोऽनुच्छ्वसन्न-घमर्षणं कुर्याद्यथा–

**ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणे वाज्यमापः शुन्धन्तु मैनसः ॥ इति त्रिवारं पठेत् ।**

**ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पितरञ्चप्रयन्त्स्वः ।**

इति त्रिवारं पठेत् । सशिरसं प्राणायामं वा त्रिवारं पठेत् । यथा–

ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यम् ।

**ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥**

**ॐ आपो ज्योतिरसोऽमृतम् । ब्रह्म भूर्भुवः स्वरोम् ॥**

इति सव्याहृतिपूर्विकां सशिरस्कां त्रिः पठेत् । ॐ इति वा त्रिः पठेत् ।

## *तदा विष्णुध्यानं यथा–*

यदा परमात्मानं विष्णुं शेषशायिनं सायुधं सश्रीकमेकाग्रमनसा ध्यायेत् ।

**ॐ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशम् ।**
**विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ॥**
**लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं,**
**वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥**

एवं स्नानं कृतं स्यात् । स्नानाङ्गतर्पणम्, तत्रादौ देवतर्पणम् तत्रादौ ऋजुकुशोपग्रहं सचन्दनाक्षततुलसीपत्रं जलमर्घ्यपात्रेण अञ्जलिना देवतीर्थेनैकैकवारं देवान् तर्पयेत्–

**ॐ ब्रह्मादयो देवास्तृप्यन्ताम् । ॐ भूर्देवास्तृप्यन्ताम् ।**
**ॐ भुवर्देवास्तृप्यन्ताम् । ॐ स्वर्देवास्तृप्यन्ताम् ।**
**ॐ भूर्भुवः स्वर्देवास्तृप्यन्ताम् ।**

## ऋषितर्पणम्

**ॐ सनकादिद्वैपायनान्ता ऋषयस्तृप्यन्ताम् । २**
**ॐ भूर्ऋषयस्तृप्यन्ताम् । २ ॐ भुवर्ऋषयस्तृप्यन्ताम् । २**
**ॐ स्वर्ऋषयस्तृप्यन्ताम् । २ ॐ भूर्भुवः स्वर्ऋषयस्तृप्यन्ताम् ।२**

## पितृतर्पणम्

**ॐ कव्यवाडनलादयः पितरस्तृप्यन्ताम् । ३**
**ॐ भूः पितरस्तृप्यन्ताम् । ३ ॐ भुवः पितरस्तृप्यन्ताम् । ३**
**ॐ स्वः पितरस्तृप्यन्ताम् । ३ॐ भूर्भुवः स्वः पितरस्तृप्यन्ताम् ।३**

ततः आचम्य सव्येन यक्ष्मतर्पणं कुर्यात् ।

ॐ यन्मया दूषितं तोयं शारीरमलसम्भवैः ।
तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥

इति तीर्थतटे उत्सृजेत् । तत्पश्चात् लतादिकेषु शिखोदकं त्यागः ।

ॐ लतागुल्मेषु वृक्षेषु पितरो ये व्यवस्थिताः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः ॥

इति वृक्षादौ दक्षिणभागे शिखां निष्पीडयेत् ॥ ततः स्नानं कृते सति धौते वाससी परिधाय भस्मादि धारणं कृत्वा गायत्रीं जपेत् । ततो गृहं व्रजेत् ।

*// इति नद्यादौ नित्यप्रातःस्नानप्रयोगः //*

## ब्रह्मकूर्चनिर्माणविधिः

**ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो यो नः प्रचोदयात् ।**

इति पलाशपत्रस्य पद्मपत्रस्य वा पात्रे ताम्रपात्रे हिरण्मयपात्रे वा नील्या गोमूत्रं पलपरिमितं गृह्णीयात् ।

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।** इति पलार्धपरिमितं कार्ष्ण्यं गोमयं गृह्णीयात् ।

**ॐ आप्यायस्व समेतुते विश्वतः सोमवृष्ण्यम् । भवावाजस्य सङ्गथे । इति सप्तपलपरिमितं ताम्रयं गोक्षीरं गृह्णीयात् ।**

**ॐ दधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः सुरभिनो मुखाकरत्प्रणऽआयू ँ षितारिषत् ।** इति पलत्रयपरिमितं श्वैत्र्य गोदधि गृह्णीयात् ।

**ॐ तेजोऽसि शुक्रमस्य मृतमसिधामनामासि प्रियन्देवानामना-धृष्टन्देवयजनमसि ।** इति पलपरिमितं गोघृतं गृह्णीयात् ।

**ॐ देवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोर्हस्ताभ्यामाददे ।** इति पलपरिमितं कुशोदकं गृह्णीयात् ।

**ॐ आपो हिष्ठा मयोभुवस्तानऽ उर्जे दधातन । महे रणाय चक्षसे । ॐ योवः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिव मातरः ॥** इति पलपरिमितं यवपिष्टं गृह्णीयात् । अनेन प्रकारेण यथोक्तानि गो मूत्रादीनि सर्वाणि प्रणवोच्चारणपूर्वकमेकत्र संमेल्य समिद्धतमेऽग्नौ **ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतसुरुचोवेनऽआवः । सबुध्न्याऽ उपमाऽअस्य विष्ठाः सतश्चयोनिमश्चाविवः ।** इति ॐ ब्रह्मणे स्वाहेति किञ्चित् हुत्वा प्रणवेन गोमूत्रादीनिष्वालोड्य प्रणवोच्चारणपूर्वकं निर्मथ्य च प्रणवोच्चारणपूर्वकं ब्रह्मकूर्चं गृहीत्वा—

**यानि त्वगस्थिगुप्तान्येनांसि देहे हि मामके ।**
**भस्मीभवन्तु सर्वाणि ब्रह्मकूर्चस्य प्राशनात् ॥**
**ॐ यन्त्वगस्तिगतं पापं देहे तिष्ठेति मामके ।**
**प्राशनाद् पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ॥**

इति पिबेत् । केवलपञ्चगव्ये तु यवपिष्टं विनैवान्यपूर्वोक्तविधिनैव निर्माय पिबेत् । इति ।

ततः प्रातः कृत्यादिकं नित्यकर्मशास्त्रोक्तविधिना निर्वर्त्य तीर्थविशेषे नद्यादौ तडागे देवालयेऽन्यज्जलाशये, तुलसीमण्डपे,

पञ्चायतनदेवतापूजामण्डपे वा प्रकृतेरानुकूल्य-प्रातिकूल्ये विचार्यान्यतमे स्थाने पूजातर्पणादिसम्भारान् गृहीत्वा शङ्खघण्टादिमङ्गलवाद्यध्वनिं कुर्वन् समागत्य हस्तौ, पादौ च प्रक्षाल्याचम्य शुद्धासनं प्रकल्प्य तदुपरि पूर्वाभिमुखः सन् उपविश्य कर्मपात्रं कुर्याद्यथा–

पर्णपुटं ताम्रपात्रं वाग्रे स्थापयित्वावश्यकानि निर्मितकुश-पवित्राणि कुशखण्डानि च गृहीत्वा–

**ॐ यद्देवा देवहेडनन्देवासश्चकृता वयम् । अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्व ँ हसः ॥**

**ॐ यदि दिवा यदिनक्तमेना ँ सि चकृमा वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्व ँ हसः ॥**

**ॐ यदिजाग्रद्यदि स्वप्नऽएना ँ सि चकृमावयम् । सूर्यो मातस्मादेनसोविश्वान् मुञ्चत्व ँ हसः ॥**

**ॐ पवित्रेस्थोवैष्णव्यौः सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । देवीरापोऽपुवोऽग्रऽइममद्ययज्ञन्नयताग्रे यज्ञपति ँसुधातुं यज्ञपतिं देवयुवम् ।** इति पवित्राणि, कुशखण्डानि च पात्रे प्रक्षिप्य ततो शुद्धजलं गृहीत्वा–

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । इति पात्रे जलं प्रक्षिपेत् ।** ततस्तिलान् गृहीत्वा–

**ॐ तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधयापितृँल्लोकान् प्रिणाहि नः ॥** इति तिलान् कर्मपात्रे प्रक्षिप्य, ततः यवान् गृहीत्वा–

**ॐयवोऽसियवयास्मद्द्वेषोयवयारातीर्दिवेत्वान्नरिक्षायत्वापृथिव्यै त्वा शुन्धन्तांल्लोकाः पितृषदनापितृषदनमसि ।**

इति यवान् पात्रे प्रक्षिपेत् । ततः गन्धं गृहीत्वा–

**ॐ गन्धद्वारान्दुराधर्षान्नित्यपुष्टाङ्करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।** इति गन्धं पात्रे प्रक्षिपेत् । ततोऽक्षतान् गृहीत्वा–

**ॐ अक्षन्नमीमदन्त ह्यवप्रियाऽअधूषत । अस्तोषतस्वभानवो**

**विप्रानविष्ठयामतीयोजान्विन्द्रते हरी ॥** इत्यक्षतान् पात्रे प्रक्षिपेत् । ततः पुष्पाणि गृहीत्वा–

**ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रेपार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणमुम्मऽइषाण सर्वलोकम्मऽइषाण ॥** इति पुष्पाणि पात्रे प्रक्षिप्य सकुशपवित्रजलान्यादाय–

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**
**यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

ॐ पुण्डरीकाक्षः पुनातु । इत्यात्मानं यज्ञसंभाराँश्चाभिषिञ्च्य ततो ब्रह्मपवित्रं पवित्रेस्थ इति मन्त्रेण दक्षहस्तस्यानामिकाङ्गुलिमूले सन्धार्य दिग्बन्धनं कुर्यात् । हस्ते वा पात्रे वा गौरसर्षपाक्षतान् गृहीत्वा–

**ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः ।**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**
**अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।**
**सर्वेषामविरोधेन पूजाकर्म समारभे ॥**
**पाखण्डकारिणो भूता भूमौ ये चान्तरिक्षगाः ।**
**दिविलोके स्थिता ये च ते नश्यन्तु शिवाज्ञया ॥**

इति दक्षिणपादाघातत्रयेण छोटिकातालत्रयेण च सर्वान् विघ्नान् उत्सारयेत्। दशदिक्षु सर्षपाक्षतान् विकीर्य–

**ॐ निर्गच्छताँश्च भूतानां वर्त्मदद्यात्स्ववामतः ।** इति वामपाद-पार्ष्णिघातत्रयेण छोटिकातालत्रयेण च सर्वान् विघ्नानपसारयेत् । ततोऽ**पवित्रः पवित्रो वा** इति मन्त्रेण कर्मपात्रस्थकुशजलैः पुनः सर्वदिक्षु जलं प्रक्षिप्य आत्मानं यज्ञसंभाराश्चाभिषिञ्चेत् । इति दिग्बन्धक्रमः ।

## *अथ ऋषितर्पणीप्रयोगः*

आदौ प्रकृतिशुद्धायां गोमयेनोपलिप्तायां वा शुद्धभूमौ सन्मृत्तिकाभिर्निर्मितायां वेदिकायां स्वस्तिनो मिमीता..इत्यारभ्य **आशुः शिशान...**इति समाप्तिपर्यन्तं पठित्वा स्वस्तिवाचनपूर्वकं यवपिष्टेन शालिपिष्टेन वाष्टदलकमलं विलिख्य कमलमध्ये चादिशक्तेर्ह्रींमितिबीजमन्त्रं सप्रणवं विलिख्य विविधैः शोभनीयैरङ्गवल्यादिभिर्वेदीं भूषयेत् ।

## *स्वस्तिवाचनम्–*

ॐ स्वस्तिनो मिमीतामश्विनो भगः स्वस्ति तेभ्यो दितिरथर्वणः। स्वस्तिपूषाऽअसुरो दधातु नः स्वस्तिद्यावापृथिवीसुचेतुना ॥१॥

ॐ स्वस्तये वायुमुपब्रुवामहे सोमं स्वस्ति भुवनस्य यस्पतिः बृहस्पति ࣿ सर्वगण ࣿ स्वस्तयेऽआदित्यासो भवन्तु नः ॥२॥

ॐ विश्वे देवानोऽअद्य स्वस्तये वैश्वानरोवसुरग्निः स्वस्तये। देवा अभवन्त्वृभवः स्वस्तये स्वस्तिनोरुद्रपात्व ࣿ हसः ॥३॥

ॐ स्वस्ति मित्रावरुणो स्वस्तिपथ्येन रेवती । स्वस्तिनः इन्द्रश्चाग्निश्चस्वस्ति नो अदिते कृधि ॥४॥

ॐ स्वस्ति पन्थामनुचरेमसूर्याचन्द्रमसाविव । पुनर्दधाताघ्नता जानतासङ्गमे महि ॥५॥

ॐ स्वस्तयनन्ताक्ष्यमरिष्टनेमिमहद्भूतं वायसन्देवतानाम् । असुरघ्नभिन्द्रसुखं सभत्सुबृहद्यशोनावमिवारुहेम ॥६॥

ॐ अ हो मुचमाङ्गिरसञ्जयन्तः स्वस्त्यात्रेय मनसा च ताक्ष्र्यम् । प्रयतपाणिः शरणं प्रपद्ये ॥ स्वस्निसम्वादेष्वभयन्नोऽअस्तु ॥७॥

इति **ॐ आशुः शिशानः** समग्रं पठेत् । ततस्तत्रैव वेदिकाया एकदेश यजमानस्याग्रे पिष्टेन त्रिकोणयन्त्रं विलिख्य तत्राधारशक्तिं पूजयेत् । यथा–

## *ततोऽर्घ्यस्थापनं पूजनञ्च*

तत्रादौ आधारशक्तिं पूजयेत्–

आधारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि।
अपां स्वरूपस्थितयात्वयैतदाप्यायते कृत्स्नमलङ्घ्यवीर्ये॥

**ॐ आधारशक्तये पृथिव्यै नमः। ॐ आधारक्तिकमलासनाय नमः।** इति सम्पूज्य तदुपरि पर्णनिर्मितं, ताम्रनिर्मितं, हिरण्मयं, रातं वार्घ्यपात्रं संस्थाप्य–

ॐ आपः क्षीरं कुशाग्राणि दध्याज्यतिलतण्डुलान् ।
दुर्वा सिद्धार्थकं ग्राह्यमष्टाङ्गोऽह्यर्घ्य उच्यते ॥

तत्रादौ जलं गृहीत्वा–

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये। शं योरभिस्रवन्तु नः। इति पात्रे जलमर्घ्यपात्रे प्रक्षिपेत्।**

**ॐ पयः पृथिव्यां पयऽओषधीषुः। पयो दिव्यनतरिक्षे पयोधाः पयस्वतीः पुनर्मांविश्वताद्रयि। इति क्षीरमर्घ्यपात्रे प्रक्षिपेत्॥**

ततः कुशाग्रखण्डत्रयं गृहीत्वा–

**ॐ यद्देवा देवहेडनन्देवासश्चकृता वयम्। अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्व ঌ हसः।**

**ॐ यदि दिवा यदिनक्तमेना ঌ सि चकृमा वयम्। वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्व ঌ हसः॥**

**ॐ यदिजाग्रद्यदि स्वप्नऽएना ঌ सि चकृमावयम्। सूर्यौ मातस्मादेनसोविश्वान् मुञ्चत्व ঌ हसः॥ इति कुशाग्रखण्डानि अर्घ्यपात्रे निक्षिपेत्।** ततो दधिं गृहीत्वा–

**ॐ दधिक्राव्णो अकारिषञ्जिष्णोरश्वस्य वाजिनः सुरभिनो मुखाकरत्प्रणा आयू ঌ षितारिषत्।**

इत्यर्घ्यपात्रे दधिः प्रक्षिपेत्। ततो घृतं गृहीत्वा–

**ॐ तेजोऽसि शुक्रमस्य मृतमसिधामनामासि प्रियन्देवानामना धृष्टन्देवयजनमसि।** इत्यर्घ्यपात्रे घृतं प्रक्षिपेत्। ततोऽक्षतान् गृहीत्वा–

**ॐ अक्षन्नमीमदन्त ह्यवप्रियाऽअधूषत। अस्तोषतस्वभानवो विप्रानविष्ठयामतीयोजान्विन्द्रते हरी॥**

इत्यर्घ्यपात्रे अक्षतान् प्रक्षिपेत्। ततो यवान् गृहीत्वाऽ

**ॐयवोऽसियवयास्मद्द्वेषोयवयारातीर्दिवेत्वान्नरिक्षायत्वापृथिव्यै त्वा शुन्धन्तांल्लोकाः पितृषदनापितृषदनमसि॥**

इत्यर्घ्यपात्रे यवान् प्रक्षिपेत्। ततः सिद्धार्थकं गृहीत्वा–

**ॐ सिद्धार्थकं स्नेहपूर्णं बलदां पुष्टिवर्द्धकम्।**
**रक्षोभूतादिनाशाय प्रयुनज्म्यर्घ्यपात्रके॥**

इत्यर्घ्यपात्रे सिद्धार्थकं प्रक्षिपेत्(गौरसर्षपं प्रक्षिपेत्)। ततो दूर्वाङ्कुराणि गृहीत्वा–

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । यवानो दूर्वे प्रतनुः सहस्रेण शतेन च ॥ इत्यर्घ्यपात्रे दूर्वाङ्कुराणि प्रक्षिपेत् ॥**

## *ततोर्घ्यपूजनप्रकारं यथा–*

**ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।**
**आयान्तु यजमानस्य दुरितक्षयकारकाः ॥**
**ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धो काबेरि जलेऽस्मिन् सन्निधिं कुरु ॥**

**ॐ अर्घ्याय नमः । ॐ अर्घ्यपात्राय नमः ।** इति सम्पूज्य धेनुमुद्रां प्रदर्श्य मत्स्यमुद्राङ्कुशमुद्राञ्च प्रदर्शयेत् । ततोऽर्घ्यपात्रं गृहीत्वोत्थाय जानुभ्यामवनीं स्पृष्ट्वा सूर्यायार्घ्यं दद्यायथा–

**ॐ एहि सूर्यः सहस्रांशो तेजाराशि जगत्पते ।**
**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥**

ॐ ह्रीं ह्रें सः इत्यर्घ्यं सूर्याय दत्वा अर्थात् अग्रे स्थापितपर्णपुटेऽर्घ्यं संस्थाप्य व्याघ्राक्षिमुद्रा प्रदर्शयेत् । ततः हस्तौ स्वस्तिकाकारं कृत्वा नमेत् । यथा–

**ॐ उद्वयं तमसस्परिपश्यन्तऽउत्तरम् । देवं देवत्रासूर्यमगन्मज्ज्योतिरुत्तमम् ॥**

**ॐ उदुत्तमं उदुत्यञ्जातवेदासं देवं वहन्तिकेतवः । दृशे विश्वाय सूर्यम् ॥**

**ॐचित्रन्देवानामुदगादनिकञ्चक्षुर्मित्रस्यवरुणस्याग्नेऽआप्राद्यावा पृथिवी अन्तरिक्ष ँ सूर्य आत्मा जगतस्तत्थुषश्च ॥**

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शत ँ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ।**

इति गन्धाक्षतपुष्पादिभिः सूर्यमर्चयेत् । ततो देहशुद्ध्यर्थं प्रायश्चित्तगोदानं कुर्यात् । यथा–

सालङ्कारां गां तन्निष्क्रयद्रव्यसहितां कौशीमेकां गामग्रे संस्थाप्य

सम्पूजयेदेभिर्मन्त्रैः—

**ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयिभ्य एव च ।**
**नमो ब्रह्मसूताभ्यश्च पवित्राभ्यो नमो नमः ॥**

**ॐ इरावती धेनुमती हि भूत ꣳसूयवसिनीमनवे दशस्या । व्यस्कम्ना रोदसी विष्णवे ते दाधर्त्थ्व पृथिवीमभितो मयूखैः स्वाहा ।**

**ॐ त्वं देवी त्वं जगन्माता त्वमेवासि वसुन्धरा ।**
**गायत्री त्वञ्च सावित्री गङ्गा त्वञ्च सरस्वती ॥**

ॐ गोपादेभ्यो नमः । ॐ गोशृङ्गेभ्यो नमः । ॐ गोपुच्छेभ्यो नमः । ॐ गोऽग्रभागेभ्यो नमः । इति यथामिलितोपचारैः सम्पूज्यऽग्रभागेभ्यो नमः । इति यथामिलितोपचारैः सम्पूज्य—

**ॐ आकृष्णेन रजसावर्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सवितारथेनादेवोयाति भुवनानि पश्यन् ॥**

**ॐ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।**
**जगद्धिताया कृष्णाय गोविन्दाय नमो नमः ॥**

इति देयब्राह्मणं त्रिः सम्पूज्य कुशजलेन गामभ्युक्ष्य गोपुच्छं गृहीत्वा स्वशिरसि समभिषिञ्चेत् ॥

**ॐ मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयता प्रजां मे तर्पयत पशून्मे तर्पयत गणान् मे तर्पयत गणा मे मा वितृषन् ॥**

ततः कुशादिसहितं गोपुच्छं समादाय संकल्पं कुर्यात्—

हरिॐतत्सदितित्रिरुच्चार्यविष्णुः३**ॐनमोभगवतेपुराणपुरुषोत्तमाय।** अद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलचराचर-जगतः सृष्टिकारिणो ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतकल्पादारभ्ये वाराहकल्पे वैवस्वतमन्वन्तरे बौद्धावतारे सत्यादिचगुर्युगिनां मध्ये अष्टाविंशतितमे कलियुगे तस्य प्रथमे चरणे सकलजगतो द्वीपानां मध्ये जम्बूद्वीपे वर्षप्रवराणां मध्ये भारतवर्षे हिमवद्विन्ध्ययोर्मध्ये आर्यावर्तान्तर्गतसरस्वतीदृषद्वत्योरन्तराले ब्रह्मावर्तैकदेशेऽन्तर्वेद्यां श्रीमद्विष्णुप्रजापतिक्षेत्रे श्रीगङ्गादेव्या उत्तरदिशि माहेन्द्रीमध्ये नेपालराज्यान्तर्गतेऽमुकमण्डले महर्षिनन्दिन्याः कर्मदाया वा नारायण्या वा निकटेऽमुकतीर्थेऽमुकक्षेत्रेऽमुकग्रामे वा इह पुण्यभूमौ षष्ठिसंवत्सराणां

मध्ये बार्हस्पत्यमानेनामुकसंवत्सरे विक्रमांशकेऽमुकवर्षेऽमुकायनेऽमुकर्तौ सौरमानेनामुकमासे चान्द्रमानेनामुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुक-राशिस्थिते श्रीसूर्येऽमुकराशिस्थिते चन्द्रमस्यमुकराशिस्थिते देवगुरौ तथा चान्येषु शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगणनक्षत्रयोगकरण-लग्नमुहूर्तविशेषेणविशिष्टायां शुभपुण्यतिथौ चाद्यामुकगोत्रोत्पन्नोऽमुक-प्रवरान्वितः शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनीयवाजसनेय-शाखाध्यायी सपत्निकः सपुत्रपौत्रादिकः सबन्धुवर्गादिकोऽमुकराशिशरीरोऽमुकनामशर्माहं ममात्मनः श्रुतिस्मृतिपुराणागमोक्तानुसारं श्रीमत्परमेश्वरप्रीतिद्वारा कायिक-वाचिकमानसिक-सांसर्गिकज्ञाताज्ञातस्पर्शास्पर्शासनशयनभोजनगमना-नृतभाषणादिजनितदुरितनिरसनपूर्वकं ऋष्यादिपूजनतर्पणाद्यात्मकं ब्रह्मकर्माधिकारार्थं देहशुद्धये इमां गां तन्निष्क्रयीभूतं द्रव्यं वामुकदैवत्यममुक-गोत्रायामुकनामशर्मणे सुपूजिताय ब्राह्मणाय दातुमहमुत्सृजे तत्सन्न मम । इति कुशखण्डं ब्रह्मणहस्ते दद्यात् ।

**ततो गोप्रार्थना–**

**ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणी ।**
**तीर्थदेवमयी यस्मात्तस्माच्छान्तिं प्रयच्छ मे ॥**
**गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।**
**गावो मे हृदयं सन्तु गवां मध्ये वसाम्यहम् ॥**

इति प्रार्थ्य कुशोदकं गोदानप्रतिष्ठाद्रव्यमादाय–

हरिः ॐ तत्सदिति पूर्वोच्चारितसंकल्पसिद्धिरस्तु अद्य कृतैतत् गोदानप्रतिष्ठार्थमिदं द्रव्यममुकदैवत्यममुकगोत्रायामुकशर्मणे सुपूजिताय ब्राह्मणाय दानप्रतिष्ठाद्रव्यत्वेन अहं सम्प्रददे । तत्सन्न मम ॥ तत्सर्वं ब्राह्मणाय दद्यात् । ततो ब्राह्मणो गोपुच्छमादाय–

**ॐ कोऽदात् कस्माऽदात् कामोऽदात् कामायादात् । कामो दाताऽकामः प्रतिग्रहिता कामैतत्ते ।** इति समभिषिञ्चेत् ॥

## *अथ स्वस्तिवाचनपूर्वकं प्रतिज्ञासंकल्पः*

**स्वस्तिवाचनम्–**

**ॐ स्वस्तीति पुष्पाञ्जलिं गृहीत्वा– ॐ स्वस्ति नऽइन्द्रो**

वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा ᳪसस्तनूभिर्व्यसेमहि देवहितं यदायुः ॥

*॥ इति वेदोक्तस्वस्तिवचनम् ॥*

ॐ श्रीमन्महागणेशाय विष्णोरंशोद्भवाय च ।
महागणाधिपतये नमोऽभीष्टप्रदाय ते ॥
नमस्ते ह्यीष्टदेवाय स्वभक्ताभीष्टदायिने ।
नमो वः कुलदेवेभ्यः स्वकुलाभीष्टकारिणे ॥
नमो वो ग्रामदेवेभ्यः कुर्वन्तु स्थानमङ्गलम् ।
वास्तुदेव नमस्तुभ्यं वास्तुसंरक्षणाय च ॥
वास्तोष्पते नमस्तुभ्यं वेश्मभूपालकाय च ।
नमो वाणीविलासिन्यै विद्याधिष्ठातृ देवते ॥
नमो हिरण्यगर्भाय सृष्टिकर्त्रे नमो नमः ।
लक्ष्म्यै सौभाग्यदायिन्यै स्वब्धिजायै नमो नमः ॥
नमो नारायणायैवं योगक्षेमप्रदायिने ।
उमायै शक्तिरूपायै वरदायै नमो नमः ।
महेश्वराय शान्ताय नमः श्रेयस्कराय ते ।
वास्तुगोष्ठक्षेमकृद्भ्यां शचीन्द्राभ्यां नमो नमः ॥
मातापितृचरणश्रीकमलेभ्यो नमो नमः ॥
गुरूणां पादपद्मेभ्यो नमो देवेभ्य एव च ।
नमो वां सोमसूर्याभ्यां याज्ञवल्क्याय ते नमः ॥
ग्रामवृद्धकुलज्येष्ठब्राह्मणेभ्यो नमो नमः ।
नमो व आप्तवृद्धेभ्यः निर्विघ्नमस्तु मे सदा ॥
सर्वात्मसाक्षिरूपाय सृष्टिस्थित्यन्तहेतवे ।
सच्चिदानन्दरूपाय नमस्ते परमात्मने ॥
आमन्त्रितेभ्यः सर्वेभ्यो नरनारीभ्य एव च ।

स्वस्ति कुलकुटुम्बेभ्यः स्वागतं शं दिशन्तु नः ॥
सुमुखश्चैककदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ।
तनोतु शं विघ्नहरो गणेश्वरो-गिराञ्च देवी सुमतिप्रदायिनी ।
महेश्वरीशान्तिकरी तनोतु शं सदाशिवश्चैव सदा शिवप्रदः ॥
ॐ सूर्यः शौर्यमथेन्दुरिन्द्रपदवींसन्मङ्गलं मङ्गलः ।
सदुबुद्धिं च बुधो गुरश्च गुरुतां शुक्रः सुखं शं शनिः ॥
राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिम् ।
नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः ॥
वनजौ वनजौ खर्वो रामौ राम कृपौ कृपः ।
कुर्वन्तु मम कल्याणमवताराहरेर्दश ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥
मङ्गलं भगवान् विवष्णुर्मङ्गलं गरुडध्वजः ।
मङ्गलं पुण्डरीकाक्षः मङ्गलायतनो हरिः ॥
मङ्गलं भगवान् रामो मङ्गलं रघुनन्दनः ।
मङ्गलं भगवान् कृष्णो मङ्गलं यदुनन्दनः ॥
मङ्गलं वासुदेवश्च मङ्गलं पुरुषोत्तमः ।
मङ्गलं परमं ब्रह्म मङ्गलं परमेश्वरः ॥

मङ्गलं जामदग्न्यश्च मङ्गलञ्च जनार्दनः ।
मङ्गलं शंकरः शर्वस्तथा धर्मः सनातनः ॥
मङ्गलं भवभूतेश मङ्गलं भववाञ्छिवः ।
मङ्गलं वामदेवश्च मङ्गलञ्च त्रियम्बकः ॥
तदेव लग्नं सुदिनन्तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलन्तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥
लाभस्तेषाञ्जयस्तेषां कुतस्तेषां पराजयः ।
येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवानीतिर्मतिर्मम ॥
सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवाः दिशन्तु नः सिद्धिं ब्रह्मेशानर्जनार्दनाः ॥
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ।
सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥

*ततः पुष्पाणि समर्पयेत् । इति स्वस्तिवाचनम् ।*

## *ततः प्रतिज्ञासंकल्पो यथा–*

कुशखण्डत्रयसहितकर्मपात्रोदकमादाय– हरि ॐ तत्सत् ३ । ॐ विष्णुः ३ । ॐ नमो भगवते पुराणपुरुषोत्तमाय ३ । अद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलचराचरजगतः सृष्टिकारिणो ब्रह्मणो द्वितीयपरार्धे श्रीश्वेतकल्पादारभ्य वाराहकल्पे वैवस्वतमन्वन्तरे बौद्धावतारे सत्यादिचगुर्युगिनां मध्ये अष्टाविंशतितमे कलियुगे तस्य प्रथमे चरणे सकलजगतो भुवादिद्वीपानां मध्ये जम्बूद्वीपे वर्षप्रवराणां मध्ये भारतवर्षे हिमवद्विन्ध्ययोर्मध्ये आर्यावर्तान्तर्गतसरस्वतीदृषद्वत्योरन्तराले ब्रह्मावर्तैकदेशेऽन्तर्वेद्यां श्रीमद्विष्णुप्रजापतिक्षेत्रे श्रीगङ्गादेव्या उत्तरदिशि माहेन्द्रीमध्ये नेपालराज्यान्तर्गतेऽमुकमण्डले महर्षिनन्दिन्याः कर्मदाया वा नारायण्या वा निकटेऽमुकतीर्थेऽमुकक्षेत्रेऽमुकग्रामे वा इह पुण्यभूमौ षष्ठिसंवत्सराणां मध्ये बार्हस्पत्यमानेनामुकसंवत्सरे विक्रमांशकेऽ-मुकवर्षेऽमुकायनेऽमुकर्तौ सौरभानेनामुकमासे चान्द्रमाने-

नामुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते चन्द्रमसि अमुकराशिस्थिते देवगुरौ तथा चान्येषु शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं ग्रहगणनक्षत्रयोगकरणलग्नमुहूर्त-विशेषेणविशिष्टायां शुभपुण्यतिथौ चाद्यामुकगोत्रोत्पन्नोऽमुकप्रवरान्वितः शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनीयवाजसनेय-शाखाध्यायी सपत्निकः सपुत्रपौत्रादिकः सबन्धुवर्गादिकोऽमुकराशिशरीरोऽमुकनामशर्माहं ममात्मनः श्रुतिस्मृतिपुराणागमोक्तानुसारं श्रीमत्परमेश्वरप्रीतिद्वारा ब्रह्मवर्चोऽभि-वृद्धिसहितसाद्गुण्यसिद्धिद्वारा चतुर्वर्गसाधनासिद्धिपूर्वकं जीवनान्ते ब्रह्मसायुज्यफलप्राप्तये सशौचस्नानसन्ध्योपासनादिनित्यकर्मानन्तरं नैमित्तिकब्रह्मकर्माङ्गतयोपाकर्म ब्रह्मसूत्राभिमन्त्रणधारणनिमित्तकश्रावणी-कर्मसम्पादनार्थं स्वगृह्योक्तविधिना यथाशक्ति पुरुषसूक्तपितृसूक्तसहितशत-रुद्रीयमन्त्रशान्तिकाध्यायवेदमातुः जपादिविविधपाठपूर्वकं विविधैः श्रौतमन्त्रैरभिमन्त्र्याभिषिञ्च्य च ब्रह्मवर्चस्वितानि यज्ञोपवीतानि रक्षासूत्राणि च सन्धारणार्थं स्वाध्यायाध्यापनककर्म कर्तुञ्च सभक्त्यर्घ्यस्थापनपूजनपूर्वकं दध्यक्षतचन्दनकुङ्कुमादिविभूषितमब्रणकलशं संस्थाप्यादौ दीपं कलशं गणेशादीनामावाहनपूजनपूर्वकं कलशस्कन्दप्रदेशे स्थापितानां गणपत्यादि-वनस्पतिपर्यन्तानां देवतानान्तथा प्राच्यादिदिगुपदिशामैरावतादिदिग्गजाना-मावाहनपूजनपूर्वकं मानवजीवने सम्बन्धितानां ब्रह्मसूत्रात्मकाना-मरुन्धतीसहितकश्यपादिसप्तर्षीणां तथा सप्रणवसप्तमहाव्याहृतीनां तथा स्वर-व्यञ्जनादित्रिषष्ठिवर्णात्मिकाया मात्रिकायास्तथा ब्रह्मनिष्ठानामयोनिजानां योनिजानाञ्च दिव्यानामदिव्यानां दिव्यादिव्यानाञ्च मरीच्यादिब्रह्मर्षीणां, देवर्षीणां, गृहवास्तुपुरुषसहितान्यवास्तुदेवतानां विश्वेषां देवानां दिव्यादिव्य-पितृणां, मनुष्याणां, स्वपितृणाञ्च तथाचान्येषां ब्रह्माण्डगोलकमध्ये स्थितानां चराचराणां ब्रह्मादिस्तम्बपर्यन्तानां जलस्थलनभश्चराणां नृदेवासुरयक्ष-राक्षसगन्धर्वसिद्धविद्याधरकिन्नराप्सरसां तथा कालमानेन भूतभविष्यद्वर्तमानेति-कालत्रयात्मकानां परार्धकल्पमन्वन्तरयुगसम्वत्सरायनर्तुमासपदासप्ताहाहोरा-त्रयाममुहूर्तनाडीलघुकाष्ठाक्षणनिमेषलववेधत्रुटित्रसरेणुद्व्यणुपरमाणूनां तथा ग्रहराशिनक्षत्रतिथिवारलग्नयोगकरणदशान्तर्दशादीनां तथा जीवात्मपरमात्मनो-स्तथाव्यक्तमहत्तत्त्वाहङ्कारभूतमनोबुद्धीन्द्रियाधिष्ठातृदेवतानां सृष्टिस्थिति-प्रलयात्मकानां सत्त्वरजस्तमसां गुणत्रयाणां जाग्रदाद्यवस्थानाञ्च तथा गोगजाश्वादीनां जरायुजानां गरुडादिपक्षिणां, मत्स्यमकरादीनामनन्त-

वासुक्यादीनां सरीसृपाणामण्डजानां तथा च तरुगुल्मादिवनस्पतिवानस्पत्यौ-षधीवीरुधामुद्भिज्जानां तथा च यूकमशकदंशमत्कुणादीनां स्वेदजानां तथा पुण्यनदीनदसरसागरद्वीपशैलारण्यादिपुण्यक्षेत्राणां पुण्यतीर्थानाञ्च तथाचो-परिष्ठानां भूरादिविविधसप्तलोकानां भूर्लोकादधःस्थितानामतलादिविविध-सप्तधोभूविवराणां लोकालोकाचलानां तथा च लोकालोकाचलेभ्योऽपि परेः स्थितानां श्वेतद्वीपमणिद्वीपान्तर्गतानां परमोत्कृष्टाधिष्ठानानां तथोपरिष्ठानां भूरादिसप्तलोकातिरिक्तानां परमोत्कृष्टाधिष्ठानानां गोलोकादीनां तथा साङ्गोपाङ्गानां श्रृतिस्मृतिपुराणोपपुराणादिविविधशास्त्राणां तत्तच्छास्त्र-प्रवर्तकानामाचार्याणाञ्चावाहनपूजनपूर्वकं तर्पणाभिमन्त्रणाभिषेचनकर्म चाहं करिष्ये ।

*॥इति प्रतिज्ञासंकल्पः ॥*

अथमण्डपस्थाष्टदलवर्तिनां दिग्देवतानां पूजनपूर्वकं दीपकलशगणेश-स्थापनपूजनविधिः यथा– तत्रादौ पूर्वे-

**ॐ पृथिव्याः सधत्स्थादग्निं पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्य मङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद् भरिष्याम ॥**

इति पूर्वे इन्द्राय नमः ॥ ततो दक्षिणे-

**ॐ अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षञ्च सन्नते ते मे सन्नमतामदऽआपश्च वरुणश्च सन्नते ते मे सन्नमता मदः । सप्त स ‌ꣳ सदोऽअष्टमी भूतसाधनी स कामाँऽ२ अद्ध्वमस्कुरु संज्ञा नमस्ते मे मुनाः ।**

इति दक्षिणे ॐ यमाय नमः ॥ ततः -

**ॐ वायो ये ते सहस्रिणो रथाशस्तेभिरागहि । नियत्वान्सो मपीतये ॥ पश्चिमे ॐ वरुणाय नमः ।** ततः उत्तरे -

**ॐ सोमो धेनु ꣳ सोमोऽअर्वन्तर्माशु ꣳसोमो वीरं कर्मण्ण्यन्ददाति। सादन्यं विदत्थ ꣳ सभेयं पितृश्रवणंयो ददाशदस्मै ।**

इत्युत्तरे ॐ कुबेराय नमः । ततः आग्नेयकोणे

**ॐ अग्निन्दूतं पुरोदधे हव्यवाहमुपब्रूवे । देवा आशादयादिहः ॥**

इत्याग्नेयां ॐ अग्नये नमः ॥ ततो नैर्ऋत्यां

**ॐ कयानश्चित्र आभुवदूती सदावृधः सखा । कयाशचिष्ठया**

**वृताः ।** इति नैर्ऋत्यां ॐ निर्ऋतये नमः ॥ ततो वायव्यां -

**ॐ वायुरनिलममृतमथेदं भस्मान्त ँ शरीरम्। ॐ क्रतो स्मरः क्लिबे स्मर कृत ँ स्मरः ।** इति वायव्यां ॐ वायवे नमः ॥ ततः ऐशान्याम्–

**ॐ ईशावास्यमिद ँ सर्वं यत्किञ्च जगत्याञ्जगत् । तेन त्यक्ते न भुञ्जीथा मा गृधः कस्यसिद्धनम् ।**

इत्यैशान्याम् ॐ ईशानाय नमः । ततस्तिसृभिर्मध्ये

**ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात्सविताज्ज्योतिरुदयाँऽ २ अजस्रम् । तस्यपूषा प्रसवे यातिविद्वान् संपश्यन् विश्वा भुवनानि गोपाः । ॐ प्रजापते न त्वदेतान्यन्यो विश्वारूपाणिपरिता बभूव । ॐ सदसस्पतिमद्भूतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधा मया सिष ँ स्वाहा ॥**

इति मध्ये ॐ सूर्याय नमः । ॐ श्री अष्टदलकमलासनाय नमः । इति मण्डपे पीठपूजा ॥

तत्र कलशादिस्थापनपूजनक्रमः । आदौ **भूरसीति** भूमिशोधनम् । कुशोदकं गृहीत्वा–

**ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीं दृ ँ ह पृथिवीं मा हि ँसीः ।**

इति भूमिशोधनम् । ततो दीपगणेशार्थमाग्नेयदिशि मण्डपे चतुरस्रमण्डले वा विलिख्य मध्ये त्रिकोणमण्डले च विलिख्य तत्राधारशक्तं पूजनं विधाय तदुपरि तण्डुलपात्रे संस्थाप्य एकस्मिन्नर्धप्रस्थमानिकायां कुण्डिकायां गोमयपिण्डे दीपं संस्थाप्य ततोऽपरस्मिन्पात्रे मोदकादिमिष्टान्नसहितं गणनाथ-प्रतिमां संस्थाप्य यज्ञवेदिकाया मध्ये धान्यमसीति सप्तधान्यानि गृहीत्वा–

**ॐ धान्यमसि धिनुहि देवान् प्राणायत्वोदानायत्वाव्यानायत्वा । दीर्घामनुप्रसितिमायुषेधान्देवो वः सविताहिरण्यपाणिः प्रतिगभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोसि ।**

इति वेदिभूमौ पर्णपात्रे वा सप्तधान्यानि प्रक्षिपेत् । सप्तधान्यानि यथा–

**यवगोधूपधान्यानि तिलाः कङ्गुस्तथैव च ।**

**श्यामाकं चणकं चैव सप्तधान्यमुदाहृतम् ॥**

ततस्तदुपरि दध्यक्षतकुङ्कुमादिभिः भूषितां द्वित्रिप्रस्थमानमितां ताम्रकुण्डिकां संस्थाप्य तदुपरिमध्ये आजिघ्र कलशमिति हिरण्मयं रजतमयं ताम्रमयं वाऽब्रणं कलशं गृहीत्वा–

**ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्जानि वर्तत्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः ॥**

इति कलशं स्थापयेत् । ततो वरुणस्योत्तम्भनमसीति कलशे तीर्थादिजलं प्रक्षिपेत्–

**ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदन मासीद ॥** इति कलशमध्ये शुद्धं जलं प्रक्षिपेत् । ततो याऽओषधीति सर्वौषधीः गृहीत्वा–

**ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनुबभ्रूणामह शतं धामानि सप्त च ॥** इति कलशमुखे सर्वौषधीः प्रक्षिपेत् । सर्वौषधयः यथा–

**मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।**
**शठी चम्पकमुस्तं च सवौषधिगणः स्मृतः ॥**

यद्वा–

**कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ।**
**वचाकर्पूरमुस्ता च सर्वौषध्यः प्रकीर्तिताः ॥**

ततो हिरण्यगर्भेति पञ्चरत्नानि गृहीत्वा–

**पञ्चरत्नानि–**

**सुवर्णं रजनं मुक्ता लाजावर्तः प्रबालकम् ।**

**अन्यदपि–**

**कनकं कुलिशं मुक्ता लाजावतर्त्तः प्रबालकम् ।**
**एतानि पञ्चरत्नानि रत्नशास्त्रविदो विदुः ।**
**अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् ॥**

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । स**

**दाधारा पृथिवीं द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥**

इति पञ्चरत्नानि कलशमुखे प्रक्षिपेत् ॥ ततो **या फलिनीरिति** पूगीफलानि गृहीत्वा–

**ॐ या फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः । बृहस्पति प्रसूतास्ता नो मुञ्चत्व हसः ।**

इति पूगीफलादीनि कलशमुखे प्रक्षिपेत् ॥ ततः **ओषधय** इति यवान् गृहीत्वा–

**ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्त ꣳ राजन्पारयामसि ॥** इति कलशमुखे यवान् स्थापयेत् । ततः गन्धद्वारेति गन्धमादाय–

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**
**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।**

इति कलशमुखे गन्धं प्रक्षिपेत् ॥ ततः काण्डात्काण्डादिति दूर्वाङ्कुराणि गृहीत्वा–

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।**
**यवानो दूर्वे प्रतनु सहस्रेण शतेन च ।**

इति कलशमुखे दूर्वाङ्कुराणि प्रक्षिपेत् । ततः **स्योनापृथिवी**ति मन्त्रेण सप्त वाष्टौ मृदो गृहीत्वा प्रक्षिपेत् । सप्तमृदः यथा–

**गजाश्वरथ्यावल्मीकसङ्गमाद् गोकुलात् ह्रदात् ।**
**राजद्वाराप्रदेशाच्च मृदमानीय निक्षिपेत् ॥**

**ॐ स्योना पृथिवी नो भवा नृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥**

इति कलशमुखे सप्तमृदः प्रक्षिपेत् । ततोऽ**श्वत्थेति**पञ्चपल्लवान् गृहीत्वा कलशे प्रक्षिपेत् । पञ्चपल्लवाः यथा–

**अश्वत्थोदुम्बरप्लक्षा न्यग्रोधश्चूत एव च ।**
**पञ्चकं पल्लवानां स्यात्सर्वकर्मसु शोभनम् ॥**

**ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाजऽ इत्किलासथ यत्सनवथ पूरुषम् ॥**

इति कलशमुखे पञ्चपल्लवान् प्रक्षिपेत् । ततो बृहस्पतेऽतीति वस्त्रयुग्मेन कलशं वेष्टयेत् । मन्त्रो यथा–

**ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छ्वसऽऋतप्रजाततदस्मासुद्रविणं धेहि चित्रम् । उपयामगृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पतये त्वा ।**

इति कलशं वेष्टयेत् । ततोऽम्बिकेऽम्बिक इति आम्रपल्लवादीन् गृहीत्वा–

**ॐ अम्बेऽअम्बिकेम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ।**

इति कलशमाम्रपल्लवादिभिराच्छादयेत् ।

ततस्तत्त्वायामीति कलशे वरुणमावाह्य–

**ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोद्ध्युरुश ँ समानऽआयुः प्रमोषीः ।**

इति वरुणं कलशमुखे पूजयेत् । ततः कलशे गङ्गादितीर्थान्यावाहयेत् ।

**ॐ सर्वे समुद्रा सरितस्तीर्थानि जलदा नदाः ।<br>आयान्तु यजमानस्य दुरितक्षयकारकाः ॥**

इति पूजयेत् । ततः पुष्पाक्षतादिभिर्हस्तेन स्पृट्वाभिमन्त्रयेत्–

**ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।<br>मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥<br>कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।<br>ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।<br>अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥**

ततः कलशप्रार्थना–

**ॐ देवदानवसंवादे मथ्यमाने महोदधौ ।<br>उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥<br>त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।<br>त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥<br>शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।**

आदित्या वसवो रुद्राः विश्वेदेवाः सपैतृकाः ।
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥
त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥

## ततो दीपपूजा

तत्रादौ पुष्पं गृहीत्वा–

ॐ भक्त्या दीपं प्रयच्छामि देवाय परमात्मने ।
त्राहि मां निरयाद्घोराद्दीपज्योतिर्नमोऽस्तु ते ॥

ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्यातिः स्वाहा ।

ॐ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् । पृथुर्भवसुखद स्त्वमग्नेः पुरीषवाहणः ॥ इत्यावाह्य– पृष्टो दिवीति दीपपूजनं कुर्यात् ।

ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽओषधी राविवेश। वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पात्तु नक्तम्॥

ॐ नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥

इति सम्पूज्य दीपं प्रार्थयेत्–

ॐ नमः कमलनाभाय नमस्ते जलशीयने ।
नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते ॥
वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥
शुभं भवतु कल्याणमारोग्यं सुखसम्पदः ।
सर्वशत्रुविनाशाय दीपज्योतिर्नमोऽस्तु ते ॥

## ततो गणेशपूजनम्

वेद्यां पूर्वदिशि स्थापितपर्णपात्रे गणेशप्रतिमां(धातुमयां पूगीफलं,

नारिकेलफलम्, गोमयपिण्डमयीम् वा) संस्थाप्य प्राणप्रतिष्ठां कुर्यात् । चन्दनाक्षतपुष्पाणि गृहीत्वा–

**ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्यमिमन्तनोत्वरिष्टं यज्ञ ꣳ समिमन्दधातु । विश्वेदेवासऽइहमादयन्तामोँ ३ प्रतिष्ठा ।**

ॐ श्रीमन्हागणपतेर्जीवप्राणेन्द्रियाणि समागत्येह चिरन्तिष्ठन्तु न मम । इति प्राणान्प्रतिष्ठाप्य कुशजलमादाय संकल्पं कुर्यात् । हरिः ॐ तत्सदित्युच्चार्य पूर्वसंकल्पसिद्धिरस्तु अद्य करिष्यमाणश्रावणीकर्म निर्विघ्नतया संपादनार्थं गणपतिपूजनमहं करिष्ये । इति संकल्प्य गणपतिमावाहयेत्, यथा– अञ्जलौ पुष्पाणि गृहीत्वा–

**ॐ गणानान्त्वा गणपति ꣳ हवामहे प्रियाणान्त्वाप्रियपति ꣳ हवामेनिधीनान्त्वानिधिपति ꣳ हवामहेव्वसोमम । आहमजा निगर्ब्भधमात्वमजासिगर्ब्भधम् ॥**

**ॐ हे हेरम्ब त्वमेह्येहि अम्बिका त्र्यम्बकात्मजः ।**
**ऋद्धिसिद्धिपते त्र्यक्षलक्षलाभयुतः शिवः ।**
**नागास्य नागहारस्त्वं गणराज चतुर्भुज ।**
**भूषितैः स्वायुधैर्दिव्यै पाशाङ्कुशपरस्वधैः ।**
**आवहयामि पूजार्थं रक्षार्थञ्च मम क्रतोः ।**
**इहागत्य गृहाण त्वं पूजां क्रतुञ्च रक्ष मे ॥**

इत्यावाह्य **ॐ भूर्भुवः स्वः** गणपतये सिद्धिबुद्धिसहिताय साङ्गाय सायुधाय सवाहनाय सपरिवाराय श्रीमते महागणाधिपतये नमः इदमासनम्, पाद्यम्, अर्घ्यम्, आचमनीयम्, पञ्चामृतम्, स्नानीयम्, पुनराचमनीयम्, वस्त्रम्, यज्ञोपवीतम्, चन्दनम्, अक्षतान्, पुष्पाणि, दूर्वाङ्कुराणि, धूपम्, दीपम्, नैवेद्यम्, पुगीफलम्, फलम्, दक्षिणाम्, पादवन्दनम्, प्रदक्षिणामेभिः सम्पूज्य ततो नारिकेलादिफलं सवस्त्रं पुरतः पात्रे निधाय स्तुतिं कुर्यात् ।

**ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ।**
**भक्तानामभयङ्कर्ता त्राता भव भवार्णवात् ॥**
**द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो ।**
**वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ।**

अनेन फलदानेन सफलोऽस्तु सदा मम ॥ इति गणपतये फलं निवेदयेत् । ततः कलशस्कन्धप्रदेशे–

ॐ गणपत्यादिपाञ्चायतनदेवता आवाहयामि यथामिलितोपचारैः पूजयामि ॐ गणपत्यादिपाञ्चायतनदेवताभ्यो नमः । ॐ विनायकादि-पञ्चलोकपालानामावाहयामि यथामिलितोपचारैः पूजयामि ॐ विनायकादि-पञ्चलोकपालेभ्यो नमः । ॐ ईश्वराद्यधिदेवता आवाहयामि यथामिलितो-पचारैः पूजयामि । ॐ ईश्वराद्यधिदेवताभ्यो नमः । ॐ अग्न्यादिप्रत्यधिदेवता आवाहयामि यथामिलितोपचारैः पूजयामि । ॐ अग्न्यादिप्रत्यधिदेवताभ्यो नमः । ॐ इन्द्रादिदशदिक्पालनामावाहयामि यथामिलितोपचारैः पूजयामि । ॐ इन्द्रादिदशदिक्पालेभ्यो नमः । ॐ धात्रादिद्वादशादित्यानावाहयामि यथामिलितोपचारैः पूजयामि । ॐ धात्रादिद्वादशदेवेभ्यो नमः । ॐ आवहादि-सप्तमरुत आवाहयामि यथामिलितोपचारैः पूजयामि । ॐ आवहादि-सप्तमरुद्भ्यो नमः । ॐ गौर्यादिषोडशमातृरावाहयामि यथामिलितोपचारैः पूजयामि । ॐ गौर्यादिषोडशमातृभ्यो नमः । ॐ वीरभद्राद्येकादशरुद्रा-नावाहयामि यथामिलितोपचारैः पूजयामि । ॐ वीरभद्राद्येकादशरुद्रेभ्यो नमः । ॐ ध्रुवाद्यष्टवसूनावाहयामि यथामिलितोपचारैः पूजयामि । ॐ ध्रुवाद्य-ष्टवसुभ्यो नमः । ॐ विनायकब्रह्मविष्णुरुद्रार्कवनस्पतीनावाहयामि यथा-मिलितोपचारैः पूजयामि । ॐ विनायकब्रह्मविष्णुरुद्रार्कवनस्पतिभ्यो नमः । इति सम्पूज्य चन्दनाक्षतपुष्पाणि गृहीत्वा प्रार्थयेत् ।

**ॐ ब्रह्मामुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसूतो बुधश्च ।**
**गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः क्षेमकरा भवन्तु ॥**
**ॐ सूर्यः शौर्यमथेन्दुरिन्द्रपदवींसन्मङ्गलं मङ्गलः ।**
**सदुबुद्धिं च बुधो गुरश्च गुरुतां शुक्रः सुखं शं शनिः ॥**
**राहुर्बाहुबलं करोतु सततं केतुः कुलस्योन्नतिम् ।**
**नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः ॥**

ततः पूर्वादिक्रमेण ऋग्वेदादीन् पूजयेद्यथा–

कलशं परितश्चतुर्दिक्षु स्थापितेषु तण्डुलं पूर्णपात्रस्थितकौशप्रतिमासु प्राणान्प्रतिष्ठाप्य–

ॐ पूर्वे ऋग्वेदमावाहयामि पूजयामि । ॐ ऋग्वेदाय नमः ।

ॐ दक्षिणे यजुर्वेदमावाहयामि पूजयमामि । ॐ यजुर्वेदाय नमः ।

ॐ पश्चिमे सामवेदमावाहयामि पूजयामि । ॐ सामवेदाय नमः ।

ॐ उत्तरेऽथर्ववेदमावाहयामि पूजयामि । ॐ अथर्ववेदाय नमः ।

ततो यज्ञपवीतस्थापनार्थं स्थापितकाष्ठफलकरूपपीठासने कलशस्थापितताम्रकुण्डिकायां वा शुक्लवस्त्रेण रम्भापत्रेण वाच्छाद्य तदुपरि सप्रणवव्याहृतिपूर्विकां गायत्रीं पठन् यज्ञोपवीतानि संस्थाप्य तत्सन्निधावेकस्मिन्देशे रक्षासूत्राणि संस्थाप्य रक्षाबन्धनपूजयेत् । यथा–

## ***रक्षाबन्धनपूजा***

यवदूर्वासर्षपचन्दनाक्षतगोमयसर्वौषधीसहितां पोटलीकृतां रक्षासूत्रिकां रक्षाबन्धनं वा कुण्डिकायामेव निधाय पात्रं स्पृशन् नारायणकवचं पठेद्यथा–

ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः ।
याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥
वारुण्यां केशवो रक्षेद् वायव्यां मधुसूदनः ।
उत्तरे श्रीधरो रक्षेद् ऐशान्यां तु गदाधरः ॥
ऊर्ध्वं गोवर्धनो रक्षेदधस्तात्तु महीधरः ।
एवं दशदिशो रक्षेद्वासुदेवो जनार्दनः ॥
यज्ञाग्रं रक्षताच्छंस्व पृष्ठे वै पद्ममुत्तमम् ।
वामपार्श्वे गदारक्षेद्दक्षिणे च सुदर्शनः ।
उपेन्द्रः पातु ब्रह्माणमाचार्यं पातु वामनः ।
ऋग्वेदमच्युतो रक्षेयजुर्वेदमथोत्तमः ॥
कृष्णो रक्षतु सामानमथर्वाणञ्च माधवः ।
उपविष्ठाँश्च यान् विप्राँस्ताँश्च रुद्रोऽभिरक्षतु ॥
यजमानं सपत्निकं पुण्डरीकाक्षो रक्षतु ।
रक्षाहीनंन्तु यत्स्थानं तत्सर्वं रक्षताद्धरिः ॥
वेदमन्त्रैस्तु कर्तव्या रक्षा शुभ्रैस्तु सर्षपैः ।
सर्वौषधीभिश्भ युता रक्षणार्थं प्रयत्नतः ॥
कृत्वा पोटलिकां पूर्वं बध्नीयाद्दक्षिणे करे ।
सुरक्षिता रक्षति च रक्षा रक्षणहेतवे ॥

## इति वक्ष्यमाणमन्त्रैः रक्षां पूजयेत्–

**ॐ रक्षोहरणं बलगहनं वैष्णवीमिदमहन्तं बलगमुत्किरा मयम्मेनिष्ठ्यो यममात्योनिचखानेदमहन्तं बलगमुत्किरामियम्मेसमानो यमसमानो निचखाने दमहन्तं बलगमुत्किरामियम्मे सबन्धुर्यम सबन्धुर्निचखानेदमहन्तंबलगमुत्किरामियम्मेसजातोयमसजातो निचखानोत्कृत्याङ्किरामि ॥**

**ॐ स्वराडसिसपत्नहासत्रराडस्यभीमातिहा । जनराडसिरक्षो हासर्वराडस्यमित्रहा ॥**

**ॐ रक्षोहणोवोबलगहनः प्रोक्षामिवैष्णवान्रक्षेहणोवोबलगहनो वनयामिवैष्णवान्रक्षोहणोवोबल-गहनोवस्तृणामिवैष्णवान्रक्षोहणौ वाम्बलगहनाऽउपदधामिवैष्णवीरक्षोहणौवाम्बलगहनौपर्य्यूहामिवै ष्णवीवैष्णवमसि वैष्णवात्स्थ ॥**

**ॐ सप्तऽऋषयः प्रतिहिताः शरीरेसप्तरक्षन्तिसदमप्प्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ ॥**

*॥इति रक्षाबन्धनपूजाविधिः ॥*

## अथ ऋषिपूजनम्

ताम्रकुण्डिकायां स्थापितकलशमुखे तण्डुलपूरितं पूर्णपात्रं संस्थाप्य तदुपरि चापामार्गमिश्रितैस्त्रिभिस्त्रिभिः कुशै निर्मितां ब्रह्मग्रन्थियुतां अरुन्धतीसहितकश्यपादिसप्तर्षीणां कौशीप्रतिमां पृथक्( पृथक् संस्थाप्य प्राणान् प्रतिष्ठापयेत् । तद्यथा–

चन्दनाक्षतपुष्पाणि गृहीत्वा–

**ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्यमिमन्तनोत्वरिष्टं यज्ञ ꣳ समिमन्दधातु । विश्वेदेवासऽइहमादयन्तामोँ ३ प्रतिष्ठा ।**

ॐ अरुन्धतीसहितानां कश्यपादिसप्तर्षीणां सन्ध्यासहितगायत्र्यादि-वेदमातृणां सवितासहितऋग्गादिवेदानां तत्पुरुषाणाञ्च ब्रह्मविष्णुमहेश्वराणां त्रिदेवानां महाकालीमहालक्ष्मीमहासरस्वतीनामा-द्याशक्तिसहितसदाशिवस्य च जीवप्राणेन्द्रियाणि सर्वाणि इह संस्थापितकौशप्रतिमासु समागत्य चिरं

तिष्ठन्तु यावत्पूजां करोमि तावद्यूयं सुस्थिरा भवन्तु मम पूजां गृह्णन्तु सुप्रसन्नाश्च भवन्तु । इति प्राणप्रतिष्ठां कुर्यात् ।

## *अथ ब्राह्मणवरणं पुण्याहवाचनञ्च ।*

तत्रादौ कुशतिलयवजलयुतगन्धपुष्पाक्षतताम्बूलपूगीफलवस्त्र-द्रव्याभरणादिकान्यादाय पूर्वाभिमुखो भूत्वा प्रत्यङ्मुखान् ब्राह्मणान् वृणुयात् । तत्रादौ संकल्पः—

ॐ तत्सदित्यादि पूर्वोच्चारितसंकल्पसिद्धिरस्तु देशकालादीन् सङ्कीर्त्य अद्यामुकगोत्रोत्पन्नोऽमुकप्रवरान्वितः शुक्लयजुर्वेदान्तर्गत-माध्यन्दिनीयवाजसनेयशाखाध्यायीसपत्निकः सपुत्रपौत्रादिकः सबन्धुवर्गादिकः सकुटुम्बादिकोऽमुकनामशर्माहं ममाद्य श्रावणीकर्मान्तर्गतपूर्वोक्तप्रतिज्ञा-संकल्पानुसारमृष्यादितर्पण-पूजनब्रह्मसूत्र-वर्मसूत्राभिमन्त्रणधारणोपाकर्म-साफल्यार्थं विविधपाठजपार्थे नानानामगोत्रान् ब्राह्मणान् एभिर्गन्धाक्षतपुष्प-ताम्बूलपूगीफलवासोद्रव्याभरणादिभिः युष्मानहं वृणे,पुण्याहवाचनाञ्च कारयिष्ये इति विविधोपचारैर्ब्राह्मणान् सम्पूज्य ततो यजमानः पुष्पाञ्जलिं गृहीत्वा—

हरिः ॐ पूर्वोच्चारितसंकल्पसिद्धिरस्तु अद्यामुकगोत्रोत्पन्नोऽमुकप्रवरा-न्वितोऽमुकशर्माहं मम करिष्यमाणश्रावणीकर्मनिमित्तकपुण्याहवाचनकर्मणि भो ब्राह्मणा ममास्मिन्यज्ञे पुण्याहं भवन्तो ब्रुवन्तु पुण्याहं ३ । ब्राह्मणाः पुण्याहम् ३ ।

**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।**
**पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥**

पुनः पूर्ववदद्येहेत्यादि संकल्पमुच्चार्य यजमानः ॐ स्वस्तिर्भवन्तो ब्रुवन्तु ३ । ब्राह्मणाः ॐ स्वस्तिः ३ ।

**ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ।**
**स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥**

पुनः पूर्ववदद्येहेत्यादि संकल्पमुच्चार्य यजमानः ॐ ऋद्धिं भवन्तो ब्रुवन्तु ३ । ब्राह्मणाः ॐ समृद्ध्यतामिति त्रिः । ॐ ऋद्धिः ३ ।

**ॐ सत्रस्यऋद्धिरस्यगन्मज्योतिरमृताऽअभूम । दिवं पृथिव्याऽअध्यारुहामा विदा देवान्त्स्वर्ज्योतिः ॥**

पुनः पूर्ववदद्येहेत्यादि संकल्पमुच्चार्य यजमानः ॐ वृद्धिं भवन्तो ब्रुवन्तु ३ ।

ब्राह्मणाः ॐ वृद्ध्यन्तामिति त्रिः । ॐ वृद्धिः ३ ।

**ॐ ज्यैष्ठ्ययञ्चमऽआधिपत्यञ्चमेमन्युश्चमेभामश्चमेभश्चमे जेमाचमेमहिमाचमेवरिमाचमेप्रथिमाचमे वर्षिमाचमेद्राघिमाचमे वृद्धञ्चमेवृद्धिश्चमेयज्ञेनकल्पताम् ॥**

पुनः पूर्ववदद्येहेत्यादि संकल्पमुच्चार्य यजमानः ॐ कल्याणं भवन्तो ब्रुवन्तु ३ । ब्राह्मणाः ॐ कल्याणम् ३ ।

**ॐ यथेमा वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्या ॐ शूद्राय चार्य्याय च स्वायचारणाय च । प्रियो देवाना दक्षिणायै दातुरिहभूयासमयम्मे कामः समृद्ध्यतामुपमादो नमतु ॥**

पुनः पूर्ववदद्येहेत्यादि संकल्पमुच्चार्य यजमानः ॐ शान्तिं भवन्तो ब्रुवन्तु ३ । ब्राह्मणाः ॐ शान्तिः ३ ।

**ॐ द्यौः शान्तिरन्तरिक्ष ॐ शान्ति पृथिवी शान्तिरापः शान्तिरो षधयः शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व ॐ शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि ॥**

पुनः पूर्ववदद्येहेत्यादि संकल्पमुच्चार्य यजमानः ॐ श्रियं भवन्तो ब्रुवन्तु ३ । ब्राह्मणाः ३ श्रीः ३ ।

**ॐ मनसः काममाकूतिं वाचः सत्यमशीय । पशूना ॐरूपमन्नस्य रसो यशः श्रीः श्रयताम् ।**

इति पुण्याहं वाचयित्वा सर्वेभ्यो ब्राह्मणेभ्यः शुभाशिषो गृह्णीयात् ।

*॥ इति पुण्याहवाचनम् ।*

## *अथ ऋषिन्यासकृते षडङ्गन्यासः*

तत्रादौ स्वाचम्य प्राणानायम्य संकल्पं कुर्यात् ।

ॐ अद्येहेत्यादि पूर्वोच्चारितसंकल्पसिद्धिरस्तु ममात्मनः श्रुतिस्मृतिपुराणोक्तानुसारं श्रीपरमेश्वरप्रीतये श्रीश्रावणीकर्माङ्गत्वेन ऋषीणां षडङ्गन्यासमहङ्करिष्ये । ततो विनियोगः–

ॐ मनोजूतिरिति मन्त्रस्य बृहस्पतिर्ऋषिर्बृहस्पतिर्देवता बृहती छन्दो हृदयन्यासे जपे विनियोगः ।

**ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्यमिमन्तनोत्वरिष्टं**

**यज्ञ ँ समिमन्दधातु । विश्वेदेवासऽइहमादयन्तामोँ ३ प्रतिष्ठ ॥**
**ॐ हृदयाय नमः ।**

ॐ अबोध्यग्निरितिमन्त्रस्य बुधगविष्ठिरऋषिः अग्निर्देवता त्रिष्टुप्छन्दः शिरोन्यासे जपे विनियोगः ।

**ॐ अबोद्ध्यग्निः समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ।**
**यह्वाऽइवप्रवयामुज्जिहानाः प्रभानवः सिस्रतेनाकमच्छ ॥**

ॐ शिरसे स्वाहा ॥

ॐ मूर्द्धानमितिमन्त्रस्य भारद्वारऋषि अग्निर्देवता त्रिष्टुप्छन्दः शिखान्यासे जपे विनियोगः ।

**ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम् । कवि ँसम्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥**

ॐ शिखायै वषट् ।

ॐ मर्माणिते इति मन्त्रस्य अप्रतिरथऋषिः मर्माणिदेवताः विराट्च्छन्दः कवचन्यासे जपे विनियोगः ।

**ॐ मर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् । उरोर्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥**

ॐ कवचाय हुम् ।

ॐ विश्वतश्चक्षुरितिमन्त्रस्य विश्वकर्माभौवनऋषिः विश्वकर्मादेवता त्रिष्टुप्छन्दः नेत्रन्यासे जपे विनियोगः ।

**ॐ विश्वतश्चक्क्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् । सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्द्यावामभूमीजनयन्देवऽएकः ।**

ॐ नेत्रत्रयाय वौषट् ।

ॐमानस्तोके इति मन्त्रस्य परमेष्ठीऋषिः एकरुद्रोदेवता जगती छन्द अस्त्रन्यासे जपे विनियोगः

**ॐ मानस्तोके तनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः । मानोव्वीरान्नुद्रभामिनोबधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥**

ॐ अस्त्राय फट् ॥

*॥ इति ऋष्यादिषडङ्गन्यासः ।*

## अथ करन्यासः

ॐ भूः अङ्गुष्ठाभ्यां नमः । ॐ भुवस्तर्जनीभ्यां नमः । ॐ स्वः मध्यमाभ्यां नमः । **ॐ तत्सवितुर्वरेण्यम**नामिकाभ्यां नमः । **ॐ भर्गो देवस्य धीमहीति** कनिष्ठिकाभ्यां नमः । **ॐ धियो यो नः प्रचोदयात्** करतलकरपृष्ठाभ्यां नमः ।

*॥ इति करन्यासः ॥*

## अथ ऋषिपूजनम् ।

तत्रादौ समावाहनमावाहनमुद्रां प्रदर्शयित्वा

**ॐ सहस्रशीर्षपुरुषः सहस्राक्षः सहस्रपात् ।**
**सभूमि ꣳ सर्वतस्मृत्त्वात्त्यतिष्ठद्दशाङ्गुलम् ॥**

भो अरुन्धतीसहिताः कश्यपादिसप्तर्षय इहागच्छत इह तिष्ठत मम पूजां गृह्णीत यावत्पूजां करोमि तावद्यूयं सुस्थिरा भवत ।

आगच्छत महाभागा ऋषयः कश्यपादयः यावत्पूजां तर्पणञ्च करोमि तावद्यूयं सुस्थिरा भवत इति ध्यानमावाहनञ्च समर्प्य–

## आसनम्

ॐ सुवर्णघटितं दिव्यं नानारत्नसमन्वितम् ।
आसनं रुचिरं यच्च गृह्यन्तां भो मुनिश्वराः ॥

**ॐ पुरुषऽएवेद ꣳ सर्वयद्भूतंय्यच्च भाव्यम् । उतामृतत्त्वस्ये शानोयदन्नेनातिरोहति ॥**

आसनं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः ।

## पाद्यम्

दूर्वा विष्णुपदी श्यामा पद्मञ्चैव चतुर्थकम् ।
समर्पयामि पाद्यार्थं गृह्णीत परमेश्वराः ॥
उष्णोदकं निर्मलञ्च सौगन्ध्यं प्रीतिदायकम् ।
पादप्रक्षालनार्थाय दत्तं गृह्णीत भो द्विजाः ॥

**ॐ एतावानस्यमहिमाज्ज्यायाँश्चपूरुषः । पादोऽस्यविश्वाभूता नित्रिपादस्यामृतन्दिवि ॥**

इति पाद्यं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः ।

## अर्घ्यम्

सुवर्णपात्रसंयुक्तं गन्धपुष्पाक्षतैर्युतम् ।
सप्तर्षयः प्रगृह्णन्तु इदमर्घ्यं मयार्पितम् ।

**ॐ त्रिपादूर्ध्वऽउदेत्पुरुषः पादोस्येहाभवत्पुनः । ततोविष्वङ् व्यक्क्रामत्साशनानशनेऽअभि ॥**

अर्घ्यं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः ।

## आचमनीयम्

ॐ कर्पूरवासितं तोयं सुवर्णकलशे स्थितम् ।
दत्तमाचमनीयञ्च युष्माकं प्रीतये सदा ।
कङ्कोलञ्च लवङ्गञ्च फलं मालतिसम्भवम् ।
प्रीत्यर्थञ्च मया दत्तं गृह्णीत भो महर्षयः ॥

**ॐ ततोविराडजायतविराजोऽअधिपूरुषः । सजातोऽअत्यरिच्च्यतपश्च्चाद्भूमिमथोपुरः ॥**

आचमनीयं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः ।

## स्नानीयम्

सुगन्धद्रव्यसंयुक्तं पवित्रममलं जलम् ।
स्नानार्थं वः समानीतं मुनयः प्रतिगृह्यताम् ।
गङ्गासरस्वतीरेवा पयोष्णीनर्मदाजलैः ।
स्नापितास्थ मया यूयं प्रसीदत महर्षयः ॥

**ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् । पशूँस्ताँश्चक्क्रे वायव्यानारण्ण्याग्ग्राम्याश्चये ॥**

स्नानीयं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-

सप्तर्षिभ्यो नमः ।

## पञ्चामृतस्नानम्

पयोदधिघृतञ्चैव मधुशर्करयान्वितम् ।
पञ्चामृतं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ।

**ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः । सरस्वती तु पञ्चधा स्वदेशे भवत्सरित् ॥**

पञ्चामृतं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः ।

पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः ।

ॐ कर्पूरवासितं तोयं सुवर्णकलशे स्थितम् ।
मया समर्पितं भक्त्याचमनीयं गृह्णीत भो ।

**ॐ आपोऽ अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्व हिरिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरापूतऽएमि । दीक्षातपसोस्तनूरसि तान्त्वा शिवा शग्मां परिदधे भद्रं वर्णं पुष्यन् ।**

पुनराचमनीयं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः ।

## यज्ञोपवीतम्

ॐ नानामन्त्रैः समुद्भूतं त्रिवृतं ब्रह्मसूत्रकम् ।
प्रत्येकं दीयते स्वच्छं गृह्णीत परमर्षयः ॥

**ॐ तस्मादश्वाऽअजायन्तयेकेचोभयादतः । गावोहजज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥**

यज्ञोपवीतानि समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपा-दिसप्तर्षिभ्यो नमः ।

## धूपः

ॐ कृष्णागुरुसमद्भूतो धूपोऽयञ्च दशाङ्गकः ।

सुगन्धः कश्यपादिभ्यः ऋषिभ्यो दीयतेऽधुना ॥

**ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः। ऊरूतदस्ययद्वैश्यः पद्भ्या शूद्रोऽअजायत ॥**

धूपमाघ्रापयामि । ॐ भूर्भुः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः ।

## *दीपः*

पञ्चवर्तीसमायुक्तः सर्वमङ्गलशोभनः ।
मया निवेदितो भक्त्या दीपोऽयं प्रतिगृह्यताम् ॥

**ॐ चन्द्रमामनसोजातश्चक्षोः सूर्योऽअजायत । श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥**

दीपं दर्शयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः ।

**ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानिजज्ञिरे । छन्दा सिजज्ञिरे तस्माद्यजुस्तस्मादजायत ॥**

**ॐ तंय्यज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्रतः । तेनदेवाऽअयजन्त साद्ध्याऽऋषयश्चये ॥**

**ॐ यत्पुरुषंव्यदधुः कतिधाव्व्यकल्प्पयन् । मुखङ्किमस्या सीत्किम्बाहूकिमूरूपादाऽउच्च्येते ॥**

## *नैवेद्यम्*

ॐ फलमूलसमायुक्तं नानाशाकसमन्वितम् ।
शर्कराघृतसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ।

**ॐ नाभ्याऽआसीदन्तरिक्ष शीर्ष्णोद्यौः समवर्त्तत। पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथालोकाँ २ अकल्प्पयन् ॥**

नैवेद्यं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः ।

## *दक्षिणा*

ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । स दाधारा पृथिवीं द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥**

दक्षिणां समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः ।

## *प्रदक्षिणा*

ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्तु प्रदक्षिणा पदे पदे ॥

**ॐ सप्तास्यसन्परिधयस्त्रिः सप्तसमिधः कृताः । देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥**

प्रदक्षिणां समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः ।

## *मन्त्रपुष्पयुक्तो नमस्कारः*

ॐ शरणागतदीनार्तपरित्राणपरायणाः ।
रक्षन्तु मुनयः सर्वे मामद्य शरणागतम् ।
ॐ सप्तर्षयः शुभाः श्रेष्ठाः सर्वेषाञ्च शुभप्रदाः ।
पुष्पाञ्जलिं मया दत्तं गृह्णन्तु मुनिसत्तमाः ॥

**ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन् ।**
**तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाद्ध्याः सन्तिदेवाः ॥**

पुष्पाञ्जलिं समर्पयामि । ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादि-सप्तर्षिभ्यो नमः । ततस्तर्पयेत् ।

ॐ कश्यपस्तृप्यताम् । ॐ अत्रिस्तृप्यताम् । ॐ भरद्वाजस्तृप्यताम् । ॐ विश्वामित्रस्तृप्यताम् । ॐ गौतमस्तृप्यताम् । ॐ जमदग्निस्तृप्यताम् । ॐ वशिष्ठस्तृप्यताम् । ॐ अरुन्धती तृप्यताम् ।

**ॐ इमावेव गौतमभरद्वाजा वयमेव गौतमोऽयं भरद्वाज इमावेव वशिष्ठकश्यपा वयमेव वसिष्ठोऽयं कश्यपोवागेवात्रिर्वाचा ह्यन्ममद्येते**

**ह वै नामैवद्यदात्रिरिति सर्वस्यात्तां भवति सर्वस्यान्नं भवति य एवं वेद ।।**

ॐ मन्त्रोक्तारुन्धतीसहिताः कश्यपादिसप्तर्षयस्तृप्यन्ताम् ।

ततो गन्धाक्षतपुष्पादिविविधोपचारैः सन्ध्यासहित गायत्र्यादिसदाशिव-पर्यन्तान् पूजयेद्यथा–

**ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।**

ॐ सन्ध्यायै नमः । ॐ सन्ध्या तृप्यताम् ।

**ॐ गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यासह ।**

**बृहत्युष्णिहाककुप्सूचीभिः शम्यन्तुत्वा ।**

ॐ गायत्र्यै नमः । ॐ गायत्री तृप्यताम् ।

**ॐ उपयामगृहीतोसि सावित्रोसि चनोधाऽअसिचनो मयि धेहि ।। जिन्वयज्ञन्जिण्वयज्ञपतिं भगाय देवायत्वा सवित्रै ।**

ॐ सावित्र्यै नमः । ॐ सावित्री तृप्यताम् ।

**ॐ सरस्वती योन्याङ्गर्भमन्तरस्विभ्यां पत्नी सुकृतं बिभर्ति । अपा ꣳ रसेन वरुणो नसाग्नेन्द्र श्रियै जनयन्नप्सु राजा ।।**

ॐ सरस्वत्यै नमः । ॐ सरस्वती तृप्यताम् । **ॐ तत्सवितु**रिति मन्त्रं पठित्वा ॐ वेदमात्रे नमः । ॐ वेदमाता तृप्यताम् ।

**ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ।।**

ॐ ऋग्वेदाय नमः । ऋग्वेदस्तृप्यताम् ।

**ॐ इषेत्वर्ज्जेत्वा वायवस्थ देवो वः सविता प्रार्प्पयतु श्रेष्ठतमाय कर्मणऽआप्यायद्ध्मगन्याऽइन्द्राय भागं प्रजावतीरनमीवाऽ-अयक्ष्मामावस्तेनऽईशतमाघशꣳसोऽध्रुवा अस्मिन्गोपतौ स्यात-वह्वीर्यजमानस्य पशून्पाहि ।** ॐ यजुर्वेदाय नमः । ॐ यजुर्वेदस्तृप्यताम् ।

**ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये । निहोता यस्य वर्हिषि ।**

ॐ सामवेदाय नमः । ॐ सामवेदस्तृप्यताम् ।

**ॐ शन्नो देवी रभिष्टयऽआपो भवन्तु पीतये । शं यो रभिस्रवन्तु नः ।**

ॐ अथर्ववेदाय नमः । ॐ अथर्ववेदस्तृप्यताम् ।

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । स दाधारा पृथिवीं द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ।।**

ॐ वेदपुरुषाय नमः । ॐ वेदपुरुषस्तृप्यताम् ।

**ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतसुरुचोवेनऽआवः । सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्चयोनिमसतश्चविवः ।**

ॐ ब्रह्मणे नमः ब्रह्मा तृप्यताम् ।

**ॐविष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि। वैष्णवमसि विष्णवे त्वा ।** ॐ विष्णवे नमः । ॐ विष्णुस्तृप्यताम् ।

**ॐ मानस्तोक तनये मा नऽ आयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः । मा नो वीरान्नुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।**

ॐ महेश्वराय नमः । ॐ महेश्वरस्तृप्यताम् ।

**ॐ आकृष्णेन रजसावर्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सवितारथेनादेवोयाति भुवनानि पश्यन् ॥** ॐ सवित्रे नमः । सविता तृप्यताम् ।

**अम्बेऽअम्बिकेम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ।**ॐ महाकाल्यै नमः । महाकाली तृप्यताम् ।

**ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रेपार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणमुम्मऽइषाण सर्वलोकम्मऽइषाण ॥**

ॐ महालक्ष्म्यै नमः । महालक्ष्मी तृप्यताम् ।

**ॐ सरस्वती योन्पाङ्गर्भमन्तरस्विभ्यां पत्क्नी सुकृतं बिभर्ति । अपा ꣸ रसेन वरुणो नसाग्नेन्द्र श्रियै जनयन्नप्सु राजा ॥**

ॐ महासरस्वत्यै नमः । महासरस्वती तृप्यताम् ।

**ॐ देवीर्द्वारमश्विनाभेषजेन्द्रो सरस्वती प्राणन्नवीर्यः । नसिद्वारादधिरिन्द्रिय वसुवने वसुधेयस्य व्यन्तु यज ।**

ॐ आदिशक्तये नमः । आदिशक्तिः तृप्यताम् ।

**ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् । ब्रह्माधिपति-र्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदा शिवोम् ।**

ॐ सदाशिवाय नमः । सदाशिवस्तृप्यताम् । ततो गन्धाक्षतादीनि गृहीत्वा–

**ॐ मनोजूति**रितिम मन्त्रं पठित्वा तत्र कलशपार्श्वे ताम्रकुण्डिकायां स्थापितेषु निखिलब्रह्मसूत्रेषु वर्मसूत्रेषु च सम्बन्धितानां ब्रह्ममयानां ब्रह्मसूत्रात्मकानां सप्रणवसप्तमहाव्याहृतिनां गणपत्यादिवनस्पतिपर्यन्तानां कलशस्कन्धस्थितानां

देवानां तथा प्राच्यादिदिगुपदिशमैरावतादिदिग्गजानां तथा ब्रह्मनिष्ठानां अयोनिजानां, योनिजानां ब्रह्माण्डान्तर्गतानां मरीच्यादीनां ब्रह्मर्षीणां, देवर्षीणां, आत्मनो वास्तुपुरुषसहितानां, अन्यवसुदेवतानां, विश्वेषां देवानां, दिव्यपितॄणां, मनुष्याणां, स्वपितॄणाञ्च तथा चान्येषां ब्रह्माण्डगोलकमध्ये स्थितानां चराणामचराणाञ्च ब्रह्मादिस्तम्बपर्यन्तानां, जलस्थलनभश्चराणां नृदेवासुरयक्षराक्षसगन्धर्वसिद्धविद्याधरकिन्नराप्सरसां तथा कालमानेन भूतभविष्यद्वर्तमानेतिकालत्रयात्मकानां परार्धकल्पमन्वन्तरयुगसम्वत्सरायनर्तुमासपक्षसप्ताहाहोरात्रयाममुहूर्तनाडीलघुकाष्ठाक्षणनिमेषलववेधत्रुटित्रसरेणुद्व्यणुपरमाणूनां तथा ग्रहराशिनक्षत्रतिथिवारलग्नयोगकरणदेशान्तर्दशादीनां तथा जीवात्मपरमात्मनोस्तथाव्यक्तमहत्तत्त्वाहङ्कारभूतमनोबुद्धीन्द्रियाधिष्ठातृदेवतानां सृष्टिस्थितिप्रलयात्मकानां सत्त्वरजस्तममसां गुणत्रयाणां जाग्रदाद्यवस्थानाञ्च तथा गोगजाश्वादीनाञ्जरायुजानां गरुडादिपक्षिणां, मत्स्यमकरादीनामनन्तवायुक्यादीनां सरीसृपाणामण्डजानां तथा च तरुगुल्मादिवनस्पतिवानस्पत्यौषधीवीरुधामुद्भिज्जानां तथा च यूकमशकदंशमत्कुणादीनां स्वेदजानां तथा पुण्यनदीनदसरसागरद्वीपशैलारण्यादिपुण्यक्षेत्राणां पुण्यतीर्थानाञ्च तथाचोपरिष्ठानां भूरादिविविधसप्तलोकानां भूर्लोकादधःस्थितानामतलादिविविधसप्ताधोभूविवराणां लोकालोकानां तथा च लोकालोकाचलेभ्योऽपि परवःस्थितानां श्वेतद्वीपमणिद्वीपान्तर्गतानां परमोत्कृष्टाधिष्ठानानां तथोपरिष्ठानां भूरादिसप्तलोकातिरिक्तानां परमोत्कृष्टाधिष्ठानानां गोलोकादीनां तथा साङ्गोपाङ्गानां श्रुतिस्मृतिपुराणोपपुराणादिविविधशास्त्राणां तत्तच्छास्त्रप्रवर्तकानामाचार्याणाञ्च जीवप्राणेन्द्रियाणि इहागत्य चिरन्तिष्ठन्तु । सुस्थिराः सुप्रसन्नाश्च भवन्तु इति सर्वेषां प्राणान्प्रतिष्ठाप्य आवाहनपूजनतर्पणदिकादीनि कुर्यात् ।

## आवाहनम्

हस्ते पुष्पाणि गृहीत्वावाहनमुद्रां प्रदर्शयित्वा

**ॐ श्रीमन्महागणपते शक्तिर्विष्णुमहेश्वरः ।**
**लोकसाक्षिन्दिनमणे आगच्छन्त्वत्र मण्डपे ॥**
**सच्चिदात्मन् महेशान सदाशिव परात्पर ।**
**विष्णोर्माया परब्रह्मन् जगतां प्रविधायकः ॥**

त्रिशक्तिरूपविश्वात्मन् त्रिमूर्तिरूपचिन्मय ।
विश्वेशजगदाधार विश्वरूपत्रयीमय ॥
सर्वविद्येश्वर प्राज्ञ चैकोऽपि बहुरूपकः ।
अरूपोऽपि सरूपश्च निर्गुणोऽपि गुणात्मकः ॥
यन्माययैव मुनयो मुह्यन्ति जगदीश्वरः ।
आत्मसाक्षिन् महाविष्णो त्ववाङ्मनसगोचरम् ॥
पितामहजगद्धातर्विधातर्जगतां यतः ।
सर्वे यूयं समागत्य ब्रह्मतेजः प्रयच्छत ॥
ब्रह्मादिदेवताः सर्वा विश्वेदेवाः सुरर्षयः ।
समित्रावरुणा सर्वे मरीच्याद्या महर्षयः ॥
आदित्या वसवो रुद्रा मातरो लोकमातरः ।
मरुतश्च दिशां नाथा भूदेवा धीमतां वराः ॥
वेदमातर्गिरां देवी विश्वधात्रि वसुन्धरे ।
अन्नपूर्णे ब्रह्मविद्ये महामाये हरिप्रिये ॥
प्राणशक्तिः क्रियाशक्तिः ज्ञानशक्ति चिदात्मिके ।
मन्त्रशक्तिर्ध्यानशक्ति प्रकृति त्रिगुणात्मिके ॥
जीवात्मानौ महदहं मनोबुद्धीन्द्रियाणि च ।
जीवान्तःकरणं स्थूलसूक्ष्मकारणविग्रहाः ॥
भूतानि साधिदेवानि तन्मात्राणि तथैव च ।
तिस्रो जीवात्मनोऽवस्था जाग्रत्स्वप्नसुषुप्तयः ।
दिव्यादिव्याश्च पितरो दिव्यादिव्याश्च मानवाः ॥
कुलदेवेष्टदेवाश्च स्वर्गिणोऽस्वर्गिणोऽपि वा ॥
वास्तोष्पते भूमिदेवाः स्थानदेवाः सुमङ्गलाः ।
ग्रामदेवाः क्षेत्रदेवाः सर्वमङ्गलमङ्गलाः ॥
देवदानवगन्धर्वविद्याधरमहोरगाः ।
नागाप्सरोर्यक्षरक्षः पिशाचाः किन्नराः खगाः ॥
गोगजाश्वमृगेन्द्राद्याः पशवो ये वनौकसः ।

गरुडाद्याः शुका हंसा मयूराद्या नगौकसः ॥
ये मत्स्यमकरग्राहा राघवाद्याः जलेचराः ।
आगच्छत यथास्थाना जलस्थलनभश्चराः ॥
उद्भिज्जस्वेदजाश्चैवाण्डजा एवं जरायुजाः ।
क्षणार्द्धभङ्गुरा जीवा ये जीवन्ति चिरायुषा ॥
आब्रह्मस्तम्बपर्यन्ताः स्वर्भूपातालचारिणः ।
देवदानवतिर्यञ्चः सवनस्पतिवीरुधः ॥
सरित्सरः प्रस्रवण सागराः देवनागराः ।
ज्ञानिनश्च महात्मानः सर्वदैव प्रजागराः ॥
स्थावरा जङ्गमाश्चापि स्वर्भूपालमास्थिताः ।
चेतनाचेतनाश्चापि ये के ब्रह्माण्डमास्थिताः ।
योगकरणनक्षत्रतिथयो ग्रहराशयः ।
ब्रह्माण्डगोलके येषां दिव्यादिव्यसमाश्रयः ।
ब्रह्मसूत्रीयतत्त्वानि यानि कानीह संसृतौ ।
समागच्छत यज्ञेऽस्मिन् भवताऽत्र स्थिराणि च ॥
आवाहनासनान्यत्र भवन्तः संविशन्तु च ।
प्रसीदन्तु शं दिशन्तु सिद्धिं यच्छतु कर्मणि ॥
पाद्यार्घ्याचमनीयानि सूपचारमयानि वै ।
गन्धाक्षतसुमान्येव धूपदीपयुतानि च ॥
पूजनानि तर्पणानि संगृह्य यज्ञमण्डपे ।
कुर्वन्तु यज्ञसूत्राणि ब्रह्मवर्चोयुतानि च ॥
रक्षाबन्धनसूत्राणि ब्रह्मतेजोमयानि वै ।
मङ्गलानि च कुर्वन्तु सर्वत्र रक्षकाणि वै ॥
महाव्याहृतयः साधिदैवा सप्रणवर्षयः ।
द्विपञ्चाशत्त्रिषष्ठी वा शब्दब्रह्मात्ममात्रिकाः ।
अष्टादशमहाविद्याः सिद्धयोऽष्टादशात्मिकाः ॥
श्रुतिस्मृतिपुराणानि काव्योपनिषदस्तथा ।

ऋचो यजूंषि सामानि ह्यथर्वाणस्तथैव च ॥
श्लोकसूत्राणि छन्दांसि सेतिहासानि यानि च ।
प्रातर्मध्याह्नसायाह्नपूर्वापरनिशीथकाः ।
गर्भजन्मजरामृत्युबाल्ययौवनवार्द्धकाः ॥
भविष्यद्भूतकुतपवर्तमानचिरन्तनाः ।
ऐहिकाष्मिकौ चैवाधुनातनपुरातनाः ॥
परमाणोः परार्धान्ताः कल्पमन्वन्तरादयः ।
युगसम्वत्सराश्चैवायनर्तुर्मासपक्षकाः ।
सप्ताहश्चेत्यहोरात्रयामनाड्योलघुस्तथा ॥
काष्ठक्षणनिमेषाश्चलववेधौ त्रुटिस्तथा ।
त्रसरेणो ह्यणौ चैव परमाणुस्वरूपक ॥
शं दिशन्त्वभिरक्षन्तु ब्रह्मसूत्रभृतो द्विजान् ॥

इत्यावाह्य–

**ॐ इमावेव मित्रावरुणा वयमेवमित्रोऽयं वरुणऽइमावेवमरीचि-दक्षवयमेव मरीचिरयं दक्षऽइमावेव मेधातिथिवामदेवावयमेव मेधातिथिरयं वामदेवो वागेव शाण्डिल्यो वाचा ह्यन्नमद्यतेतिर्हवै नामैतद्यच्छाण्डिल्यमिति सर्वस्यान्ताभवतिसर्वन्यान्नं भवति य एवं वेद ।**

ॐ मित्रादिदेवेभ्यो नमः । इति सम्पूज्य ॐ मित्रस्तृप्यताम् । ॐ वरुणस्तृप्यताम् । ॐ मरीचिस्तृप्यताम् । ॐ दक्षस्तृप्यताम् । ॐ मेधातिथिस्तृप्यताम् । ॐ वामदेवस्तृप्यताम् । ॐ शाण्डिल्यस्तृप्यताम् । ॐ मन्त्रोक्ताः ऋषयस्तृप्यताम् ।

**ॐ इमावेवक्रतुच्च्यवनावयमेवक्रतुरयं च्यवनऽइमावेव ऋचीककहोडावयमेव ऋचीकोऽयं कहोडऽइमावेवाष्टावक्रमैत्रेयवयमेवाष्टावक्रोऽयं मैत्रेयवागेवौर्वोवाचाह्यन्नमद्यतेतिर्हवै नामैतदौर्व इति सर्वस्यात्ता भवति सर्वस्यान्नं भवति य एवं वेद ।**

ॐ क्रत्वादिदशर्षिभ्यो नमः इति सम्पूज्य–

ॐ क्रतुस्तृप्यताम् । ॐ च्यवनस्तृप्यताम् । ॐ ऋचीकस्तृप्यताम् । ॐ कहोडस्तृप्यताम् । ॐ अष्टावक्रस्तृप्यताम् । ॐ मैत्रेयस्तृप्यताम् ।

ॐ और्वस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यताम् ।

**ॐ इमावेव पुलस्त्याङ्गिरसावयमेवापुलस्त्योऽयमङ्गिराऽइमावेव पुलहप्रचेतसावयमेवपुलहोयं प्रचेता इमावेव भृगूद्दालकावयमेव भृगुरयमुद्दालका वागेव याज्ञवल्क्त्यो वाचाह्यन्नमद्यतेतिर्ह वै नामैतद् याज्ञवल्क्यऽइति सर्वस्यात्ता भवति सर्वस्यान्नं भवति य एवं वेद ।**

ॐ पुलस्त्यादिमहर्षिभ्यो नमः । ॐ पुलस्त्यस्तृप्यताम् । ॐ अङ्गिरास्तृप्यताम् । ॐ पुलहस्तृप्यताम् । ॐ प्रचेतास्तृप्यताम् । ॐ भृगुस्तृप्यताम् । ॐ उद्दालकस्तृप्यताम् । ॐ याज्ञवल्क्यस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यताम् ।

**ॐ इमावेव वैशम्पायन सोमेश्वरावयमेववैशम्पायनोऽयं सोमेश्वर इमावेवाश्वलायनोऽयं कात्यायनऽइमावेव पतञ्जलिपर्वतावयमेवपतञ्जलिरयं पर्वतो वागेिव पाणिनिर्वाचा ह्यन्नमद्यतेतिर्द्देवैनामैतत्पाणिनिरितिसर्वस्यान्ता भवति सर्वस्यान्नं भवति यऽएवंवेद ॥**

ॐ वैशम्पायनादिमहर्षयस्तृप्यन्ताम् । ॐ वैशम्पायनस्तृप्यताम् । ॐ सामेश्वरस्तृप्यताम् । ॐ आवश्वलायनस्तृप्यताम् । ॐ कात्यायनस्तृप्यताम् । ॐ पतञ्जलिस्तृप्यताम् । ॐ पर्वतस्तृप्यताम् । ॐ पाणिनिस्तृप्यताम् ।

**ॐ इमावेव मुहर्धौम्यावयमेवमुहुरयं धौम्यऽ इमावेव गालव-पैञ्जवनावयमेव गालवोऽयं पैलवनऽइमावेवोपमन्युलाक्षयनावयमेवोपमन्युरयं लाक्षयनोवागेव बृहस्पतिर्वाचाह्यन्नमद्यतेतिर्हवैनामैतद्यद् बृहस्पतिरिति सर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ।**

ॐ धौम्यादिऋषयस्तृप्यन्ताम् । इति सम्पूज्य ॐ महुस्तृप्यताम् । ॐ धौम्यस्तृप्यताम् । ॐ गालवस्तृप्यताम् । पैञ्जवनस्तृप्यताम् । ॐ उपमन्युस्तृप्यताम् । ॐ लाक्षयेनस्तृप्यताम् । ॐ बृहस्पतिस्तृप्यताम् ।

**ॐ इमावेवशङ्खवात्स्यायनावयमेव शङ्खोऽयं वात्स्यायन ऽइमावेव कौण्डिन्यवासिष्ठावयमेवकौण्डिन्योऽयं वासिष्ठऽइमावेववासितमैत्रावरुणावयमेवासितोऽयं मैत्रावरुणो वागेवन्नितो वाचा ह्यन्नमद्यतेतिर्हवैनामैतद्यत्त्रित इति सर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ॥** ॐ शङ्खस्तृप्यताम् । ॐ वात्स्यायनस्तृप्यताम् ।

ॐ कौडिन्यस्तृप्यताम् । ॐ वासिष्ठस्तृप्यताम् । ॐ असितस्तृप्यताम् । ॐ मैत्रावरुणस्तृप्यताम् । ॐ त्रितस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ॥

**ॐ इमावेवोत्तङ्कजाजली ह्यर्थमेवोत्तङ्कोऽयं जाजलिऽइमावेव कवषकण्वावयमेव कवषेऽयं कण्वइमावेवदेवरातौशिजावयमेव देवरातोऽयंमुशिजोवागेवोषङ्गुर्वाचा ह्यन्नमद्यतेतिर्हवैनामैतद्यदुषङ्गुरिति सर्वस्यात्ता भवति सर्वस्यान्नं भवति य एवं वेद ।**

ॐ उत्तङ्कादिमहर्षयस्तृप्यन्ताम् । इति सम्पूज्य- ॐ उत्तङ्कस्तृप्यताम् । ॐ जाजलिस्तृप्यताम् । ॐ कवषस्तृप्यताम् । ॐ कण्वस्तृप्यताम् । ॐ देवरातस्तृप्यताम् । ॐ औशिजस्तृप्यताम् । ॐ उशङ्गुस्तृप्यताम् । इति सम्पूज्य ॐ मन्त्रोक्ता ऋषयस्तृप्यताम् ॥

**ॐ इमावेव यवक्रीतरैभ्यावयमेवयवक्रीतोऽयं रैभ्यऽइमावेवार्वसुपरावसूह्ययमेवार्वावसुरयं परावसुरिमावेव जोबाल्युग्रश्रवसावयमेवजाबालिरयमुग्रश्रवावागेवविश्रवा वाचा ह्यन्नमद्यतेतिर्हवै नामैतद्युद्विश्रवा इति सर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ॥**

ॐ यवक्रीतादिऋषिभ्यो नमः । इति सम्पूज्य– ॐ अर्वावसुस्तृप्यताम् । ॐ परावसुस्तृप्यताम् । ॐ जाबालिस्तृप्यताम् । ॐ उग्रश्रवास्तृप्यताम् । ॐ विश्रवास्तृप्यताम् । ॐ मन्त्राक्ता ऋषयस्तृप्यताम् ।

**ॐ इमावेव सत्यरिमालावयमेवा सत्योऽयं रिमालऽइमावेवसुभित्र छत्रपालावयमेवासुमित्रोऽयं छत्रपालऽइमावेवबलिमह्यशिरसावयमेवबलिरयं महाशिरा वागेव स्थूलशिरा वाचा ह्यन्नमद्यतेतिर्हवै नामैतद्यत्स्थूलशिरा इति सर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ॥**

ॐ सत्यादिऋषिभ्यो नमः । इति सम्पूज्य– ॐ सत्यस्तृप्यताम् । ॐ रिमालस्तृप्यताम् । ॐ सुमित्रस्तृप्यताम् । ॐ छत्रपालस्तृप्यताम् । ॐ बलिस्तृप्यताम् । ॐ महाशिरास्तृप्यताम् । ॐ स्थूलशिरास्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यताम् ।

**ॐ इमावेव कौशिकदामोष्णीषवयमेवकौशिकोऽयं दामोष्णीषऽइमावेव पैलशुकदेवावयमेवपैलोऽयं शुकदेवऽइमावेवाप्सुहोभ्योतित्तिरीर्ह्ययमेवात्सुहोभ्योयंतित्तिरिर्वागेवाणिमाण्डव्यो वाचा**

**ह्यन्नमद्यतेतिर्हवैनामैतद्यदणिमाण्डव्य इति सर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ॥**

ॐ कौशिकादिमहर्षिभ्यो नमः । इति सम्पूज्य– ॐ कौशिकस्तृप्यताम् । ॐ दामोष्णीषस्तृप्यताम् । ॐ पैलस्तृप्यताम् । ॐ शुकदेवस्तृप्यताम् । ॐ अप्सुहोभ्यस्तृप्यताम् । ॐ तित्तिरिस्तृप्यताम् । ॐ अणिमाण्डव्यस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यताम् ।

**ॐ इमावेववकदाल्भ्यावयमेववकोऽयं दाल्भ्यऽइमावेवशुनकसर्पिमालिनावयमेवशुनकोऽयं सपिर्मालीमावेवत्रैबलि-पर्णादावयमेव त्रैबलिरयं पर्णादोवागेव वायुभक्षोवाचा ह्यन्नमद्यतेतिर्हवैनमैतद्यद्वायुभक्ष इति सर्वस्यान्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ॥**

ॐ वक्रादिमहर्षिभ्यो नमः । इति सम्पूज्य ॐ वकस्तृप्यताम् । ॐ दाल्भ्यस्तृप्यताम् । ॐ शुनकस्तृप्यताम् । ॐ सर्पिमालीस्तृप्यताम् । ॐ त्रैबलिस्तृप्यताम् । ॐ पर्णादस्तृप्यताम् । ॐ वायुभक्षस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यताम् ।

**ॐ इमावेवसारिकाबलिवाकावयमेव सारिकोऽयं बालिवाकऽ-इमावेवसिनीवाकसत्यपालावयमेवसिनीवाकोऽयं सत्यपालऽइमावेवदाकृतश्रमजातुकर्णो वागेवशिखावन् वाचा ह्यन्नमद्यतेतिर्हवैनामैतद्यच्छिखावानिति सर्वस्यान्नो भवति यऽएवं वेद ।**

ॐ तारकादिऋषयस्तृप्यन्ताम् । ॐ सारिकस्तृप्यताम् । ॐ बलिबाकस्तृप्यताम् । ॐ सिनीवाकस्तृप्यताम् । ॐ सत्यपालस्तृप्यताम् । ॐ अकृतश्रमस्तृप्यताम् । ॐ जातुकर्णस्तृप्यताम् । ॐ शिखावान् तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ॥

**ॐ इमावेवसच्चिदानन्दपारिजातकावयमेवासच्चिदानन्दोऽयं पारिजातकावयमेवासच्चिदानन्दोऽयं पारिजातकऽइमावेवसदानन्द-सावर्णावयमेवासदानन्दोऽयं सावर्णइमावेवभालुकिगालवावयमेवाभालुकिरयं भालवोवागेवजंघाबन्धुर्वाचाह्यन्नमघतेतिर्हवै नामैतद्यज्जंघाबन्धुरितिसर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ॥**

ॐ सच्चिदानन्दादिऋषिभ्यो नमः । इति सम्पूज्य सच्चिदानन्दस्तृप्यताम् ।

ॐ पारिजातकस्तृप्यताम् । ॐ सदानन्दस्तृप्यताम् । ॐ सावर्णस्तृप्यताम् । ॐ भालुकिस्तृप्यताम् । ॐ गालवस्तृप्यताम् । ॐ जंघाबन्धुस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यताम् ।

**ॐ इमावेवमौञ्जायनकोपबन्धुह्ययमेवमौञ्जायतीऽयं कोप बन्धुरिमावेवहरिबभ्रुमालिनावयमेवहरिबभ्रुरयं बभ्रुमालीमामे वनाचिकेतसनातनावयमेवनाचिकेतोऽयं सनातनो वागेवपैङ्ग्यो वाचा ह्यन्नमद्यतेतिर्हवै नामैतद्यत्पैङ्ग्य इति सर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ।** ॐ मौञ्ज्यादिमन्त्रोक्ता ऋषयस्तृप्यन्ताम् । ॐ मौञ्ज्यायनस्तृप्यताम् । ॐ कोपबन्धुस्तृप्यताम् । ॐ हरिबभ्रुस्तृप्यताम् । ॐ बभ्रुमालीस्तृप्यताम् । ॐ नाचिकेतस्तृप्यताम् । ॐ सनातनस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ।

**ॐ इमावेव रामकृष्णावयमेवरामोऽयंकृष्णऽइमावेवघटजानुका-लम्बावयमेवघटजानुकोऽयंमाबलम्बऽइमावेवपवित्रपाणिवेणुजंघो वागेव वराहो वाचा ह्यन्नमद्यतेतिर्हवै नामैतद्यद्वराह इति सर्वस्यात्ता सर्वयान्नं भवति यऽएवं वेद ।**

ॐ रामादिऋषयस्तृप्यन्ताम् । ॐ रामस्तृप्यताम् । ॐ कृष्णास्तृप्यताम् । ॐ घटजानुकस्तृप्यताम् । ॐ आलम्बस्तृप्यताम् । ॐ पवित्रपाणिस्तृप्यताम् । ॐ वराहस्तृप्यताम् । ॐ कनकनन्दा तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यताम् ॥

**ॐ इमावेवकठकालापावयमेवकठोयं कालाप इमावेव बलिविष्णुह्ययमेव बलिरयं विष्णुरिमावेव नरहरिहरिनिधीह्ययमेवनर हरिरयमेव हरिनिधिर्वागेव सदानन्दो वाचाह्यन्नमद्यतेतिर्हवै नामै तद्यत्सदानन्द इति सर्वस्यत्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ॥**

ॐ कठकालादिऋषयस्तृप्यन्ताम् । ॐ कठस्तृप्यताम् । ॐ कालापस्तृप्यताम् । ॐ बलिस्तृप्यताम् । ॐ विष्णुस्तृप्यताम् । ॐ नरहरिस्तृप्यताम् । ॐ हरिनिधिस्तृप्यताम् । ॐ सदानन्दस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ।

**ॐ इमावेव सदाशिवहरबल्लभावयमेवसदाशिवोऽयं हरवल्लभऽ-इमावेवशक्तिगोपीवल्लभावयमेवशक्तिरयं गोपीवल्लभऽइमावे**

**वशुकशौनकावयमेवशुकोऽयं शौनकोवागेवैकतो वाचाह्यन्नमद्यते तिर्हवैनामैतद्यदेकतइतिसर्वस्यात्ताभवतिसर्वस्यान्नंभवतिय्ऽएवंवेद॥**
ॐ सदाशिवादय ऋषयस्तृप्यन्ताम् । ॐ सदाशिवस्तृप्यताम् । ॐ हरवल्लभस्तृप्यताम् । ॐ शक्तिस्तृप्यताम् । ॐ गोपीवल्लभस्तृप्यताम् । ॐ शुकस्तृप्यताम् । ॐ शौनकस्तृप्यताम् । ॐ एकतस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ॥

**ॐ इमावेव शौनकाद्या ऋषयऽइमऽएव पुरुषार्थचतुष्टयसा-धनको ऋषयऽइमऽएव लोकहितकारका ऋषयोमे वितस्ति-परिमिताबालखिल्या ऋषयो ये दीर्घतपस्विन ऋषयो वागेव ये ब्रह्मर्षिदेवर्षिमहर्षयोवाचाह्यन्नमद्यतेतिर्हवै नामैतद्ये सर्वे ब्रह्मर्षिदे वर्षिमहर्षय इतिसर्वस्यात्ता भवति सर्वस्यान्नं भवति यऽएवं वेद ।**
ॐ शौनकादिऋषयस्तृप्यन्ताम् । ॐ शौनकादायोऽष्टाशीतिसहस्राणि ऋषयस्तृप्यन्ताम् । ॐ बलिखिल्यादयः षष्ठीसहस्राणिऋषयस्तृप्यन्ताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यतन्ताम् ।

**ॐ अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवता आदित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रोदेवता वरुणो देवता ।**

ॐ अग्न्यादयदेवतास्तृप्यन्ताम् । ॐ अग्निस्तृप्यताम् । ॐ वातस्तृप्यताम् । ॐ सूर्यस्तृप्यताम् । ॐ चन्द्रमास्तृप्यताम् । ॐ वसवस्तृप्यन्ताम् । ॐ मरुतस्तृप्यन्ताम् । ॐ विश्वेदेवास्तृप्यन्ताम् । ॐ बृहस्पतिस्तृप्यताम् । ॐ इन्द्रस्तृप्यताम् । ॐ वरुणस्तृप्यताम् । ॐ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ॥

**ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचोवेनऽ आवः । सबुध्न्याऽउपमा अस्यविष्ठाः सतश्चयोनिसतश्चविवः ।**
ॐ मन्त्रोक्ता ऋषयस्तृप्यन्ताम् ।

**ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णो र्ध्रुवोऽसि वैष्णवमसिविष्णवेत्वा ।** ॐ विष्णवे नमः । ॐ विष्णुस्तृप्यताम् ।

**ॐनमः शम्भवाय च मयो भवायच नमः शङ्कराय च मयस्कराय**

ततोऽपसव्येन प्राचीनावीती दक्षिणाभिमुखः पातितवामजानु-र्मोटितकुशतिलाञ्जलित्रयेणपितृतीर्थेणखड्गपात्रेणचदिव्यपितॄनावाह्यतर्पयेत्।

**ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशतऽआवह पितॄन् हविषेऽअत्तवे ।**

**ॐ आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्द्देवयानैः । अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान् ॥**

इति मन्त्रद्वयं पठित्वा । ॐ कव्यवाडनलादयो दिव्यपितर इहागच्छन्त्विह तिष्ठन्तु गृह्णन्त्वेताञ्जलाञ्जलीन् ।

ॐ कव्यवाडनलौ तृप्येतामिदं तिलोदकं तभ्यां स्वधा नमः ३ । ॐ सोमस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३ । ॐ यमस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३ । ॐ अर्यमा तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः ३ । ॐ अग्निष्वातास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः ३ । ॐ सोमपास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः ३ । ॐ बर्हिषद-स्तृप्यन्तामिदंतिलोदकंतेभ्यःस्वधानमः ३।ॐयमायनमः ३।ॐधर्मराजायनमः ३। ॐ मृत्यवे नमः ३ । ॐ अन्तकाय नमः ३ । ॐ वैवस्वताय नमः ३ । ॐ कालाय नमः ३ । ॐ सर्वभूतक्षयाय नमः ३ । ॐ औदुम्बराय नमः ३ । ॐ दध्नाय नमः ३ । ॐ नीलाय नमः ३ । ॐ परमेष्ठिने नमः ३ । ॐ वृकोदराय नमः ३ । ॐ चित्राय नमः ३ । ॐ चित्रगुप्ताय नमः ३ ।

## *स्वपितृतर्पणम्*

ततआगच्छन्तुमेपितरइमान्गृह्णन्त्वेताञ्जलाञ्जलीनितिपितॄनावाह्यतर्पयेत्–

**ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः । असुं य ऽईयुरवृकाऽऋतन्यास्ते नोवन्तु पितरो हवेषु ॥**

ॐ अद्येहामुकगोत्रोऽस्मत्पिताऽमुकस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति प्रथमाञ्जलिं पित्रे दद्यात् ।

**ॐ अङ्गिरसो नः पितरोनवग्वाऽअथर्वाणो भृगवः सोम्यासः । तेषांवय ꣳ सुमतौयज्ञियानामपिभद्रे सौमनसे स्याम ।**

अनेन मन्त्रेण पूर्ववत् द्वितीयाञ्जलिं पितत्रे दद्यात् ।

**ॐ आयन्तु नः पितरः सोम्यासोग्निष्वाताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोधिब्रुवन्तु तेवन्त्वस्मान् ॥**

अनेन मन्त्रेण पूर्ववत् तृतीयाञ्जलिं पित्रे दद्यात् ।

**ॐ ऊर्ज्जंवहन्तीरमृतंघृतम्पयः कीलालम्परिस्रुतम् । स्वधास्त्थतर्पयतमेपितॄन् ॥**

ॐ अद्येहामुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्रस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति पितामहाय प्रथमाञ्जलिं दद्यात् ॥

**ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः । अक्षन्पितरो मीमदन्त पितरो तीतृपन्त पितरः पितरः शुन्धध्वम् ॥**

अनेन मन्त्रेण पितामहाय पूर्ववत् द्वितीयाञ्जलिं दद्यात् ।

**ॐ येचेहपितरोयेचनेहयाँश्चविद्मयाँ २ । उचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदः स्वधाभिर्यज्ञ ँ सुकृतञ्जुषस्व ॥**

अनेन मन्त्रेण पितामहाय पूर्ववत् तृतीयाञ्जलिं दद्यात् ।

**ॐ मधुवाताऽऋतायतेमधुक्षरन्तिसिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥**

ॐ अद्येहामुकगोत्रोऽस्मत्प्रपितामहोऽमुकशर्मा आदित्यस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति प्रपितामहाय प्रथमाञ्जलिं दद्यात् ।

**ॐ मधुनक्तमुतोषसो मधुमत्पार्थिव ँ रजः । मधुद्यौरस्तुनः पिता ।** अनेन मन्त्रेण प्रपितामहाय द्वितीयाञ्जलिं दद्यात् ।

**ॐ मधुमान्नो वनस्पतिर्मधुमाँ ऽ २ । अस्तुसूर्यः ।माध्वीर्गावो भवन्तुनः ॥** अनेन मन्त्रेण प्रपितामहाय पूर्ववत्तृतीयाञ्जलिं दद्यात् ॥

**ॐ आमावाजस्यप्रथमोजगम्यादेमे द्यावापृथिवी विश्वरूपे । आमागन्ताम्पितरामातराचामासोमोऽअमृतत्वेनगम्यात् ।** इतिमन्त्रंपठित्वा

ॐ अद्येहाऽमुकगोत्राऽस्मन्माताऽमुकी देवी वसुस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा । इति अञ्जलित्रयं दद्यात् ॥

**ॐ आमावाजस्यप्रथमोजगम्यादेमे द्यावापृथिवी विश्वरूपे ।**
**आमागन्ताम्पितरामातराचामासोमोऽअमृतत्वेनगम्यात् ॥**

ॐ अद्येहामुकगोत्राऽस्मत्पितामही अमुकी देवी रुद्रस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा । इति त्रिः ।

**ॐ आमावाजस्यप्रथमोजगम्यादेमे द्यावापृथिवी विश्वरूपे ।**

**आमागन्ताम्पितरामातराचामासोमोऽअमृतत्वेनगम्यात् ॥**

ॐ अद्येहामुकगोत्राऽस्मत्प्रपितामही अमुकी देवी आदित्यस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा ॥ इति त्रिः ।

**ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तसतोवः पितरो देष्मैतद्वः पितरो वासः ॥**

ॐ अद्येहाऽमुकगोत्रोऽस्मन्मातामहोऽमुकशर्मा वसुस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति प्रथमाञ्जलिं मातामहाय दद्यात् ।

**ॐ नमो वः** इति मन्त्रेण पूर्ववद् द्वितीयाञ्जलिं तृतीयाञ्जलिं च मातामहाय दद्यात् । **ॐ नमो वः** इति मन्त्रेण अद्येहामुकगोत्रोऽस्मत्प्रमातामहोऽमुकशर्मा रुद्रस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति प्रमातामहाय प्रथमद्वितीयतृतीयाञ्जलीन् दद्यात् ।

**ॐ नमो वः** इति मन्त्रेण अद्येहामुकगोत्रोऽस्मद्वृद्धप्रमातामहो ऽमुकशर्माऽदित्यस्वरूपस्तृप्यतामिदं तिलोदकं तस्मै स्वधा । इति वृद्धप्रमातामहाय प्रथमद्वितीयतृतीयाञ्जलीन् दद्यात् ।

**ॐ आमावाजस्यप्रथमोजगम्यादेमे द्यावापृथिवी विश्वरूपे । आमागन्ताम्पितरामातराचामासोमोऽअमृतत्वेनगम्यात् ॥**

ॐ अद्येहाऽमुकगोत्रास्मन्मातामही अमुकी देवी वसुस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा इति त्रिः ।

**ॐ आमावाजस्य** इति मन्त्रेण अद्येहाऽमुकगोत्राऽस्मत्प्रमातामही (अमुकी) देवी रुद्रस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा । इति त्रिः ।

**ॐ आमावाजस्य** इति मन्त्रेण अद्येहामुकगोत्राऽस्मद्वृद्धप्रमातामही (अमुकी) देवी आदित्यस्वरूपा तृप्यतामिदं तिलोदकं तस्यै स्वधा नमः । इति त्रिः ।

ततः क्रमेण ज्येष्ठादीन् सपत्नीकाँश्च तर्पयेत् ।

**तातान्बात्रितयं सपत्नजननी मातामहादित्रयं**
**सस्त्रि स्त्री तनयादितातजननीस्वभ्रातरः सस्त्रियः ॥**
**तातान्बात्मभगिन्यपतयधवयुक् जायापिता सद्गुरुः**
**शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥**

ॐ आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
पितृवंशे मृता ये च मातृवंशे तथैव च ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥
ते तृप्तिमखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः ।
ये बान्धवाऽबान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते सर्वे तृप्तिमायान्तु मद्दत्तेनाम्बुनाखिलाः ॥
देवासुरास्तथा यक्षाः नागाः गन्धर्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥
जलेचरा भूमिचरा वाय्वाहाराश्च जन्तवः ।
ते तृप्तिमखिला यान्तु मद्दत्तेनाम्बुनाखिलाः ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाँल्लोकानिदमस्तु तिलोदकम् ॥
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
इदमक्षय्यमेवास्तु मया दत्तं तिलोदकम् ॥

## वस्त्रनिष्पीडनम्

ॐ ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते पिबन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥

ततः सव्यं कृत्वाऽचम्य पूर्वाभिमुखो भूत्वा ब्रह्मादीन् पूजयेत् ।

## ब्रह्मादिदेवानां पूजनम्

ॐ ब्रह्म जज्ञानं प्रथमंपुरस्ताद्विसीमतः सुरुचोवेनऽआवः ।
सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥

ॐ ब्रह्मणे नमः ।

ॐ इदं विष्णुर्विचक्रमे त्रेधानिदधेपदम् । समूढमस्यपा ॐ सुरेस्वाहा ॥

ॐ विष्णवे नमः ।

**ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः । बाहुभ्यामुत ते नमः ॥**

ॐ रुद्राय नमः ।

**ॐ भूर्भुवः स्वः तत्सवितुर्व्वरेण्यम्भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात् ॥** ॐ सवित्रे नमः ।

**ॐ मित्रस्य चर्षणीधृतोवोदेवस्यसानसि । द्युम्नंचित्रश्रवस्तम् ॥**

ॐ मित्राय नमः ।

**ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्त्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽ ऋतसदनमासीद ।**

ॐ वरुणाय नमः ।

## *सूर्याघ्र्यदानम्*

**ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।**
**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥**

अनेन मन्त्रेण सूर्यायार्घ्यं दिवाकर ।

**ॐअदृश्रमस्यकेतवोविरश्मयोजनाँ२ऽअनु।भ्राजन्तोऽअग्नयोयथा। उपयामगृहीतोसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय। सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोहं मनुष्येषुभूयासम् ॥**

**ॐ ह ꣳ सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतं बृहत् ॥**

इति मन्त्राभ्यां सूर्यमुपस्थाय प्रदक्षिणीकृत्य दिग्भ्यो दिग्देवताभ्यश्च प्रणमेत्।

दिशां दिग्देवानाञ्च प्रणमनम्-

ॐ प्राच्यै दिशे नमः । ॐ इन्द्राय नमः । ॐ आग्नेय्यै दिशे नमः । ॐ अग्नये नमः । ॐ दक्षिणायै दिशे नमः । ॐ यमाय नमः । ॐ नैर्ऋत्यै दिशे नमः । ॐ निर्ऋतये नमः । ॐ प्रतीच्यै दिशे नमः । ॐ वरुणाय नमः । ॐ वायव्यै दिशे नमः । ॐ वायवे नमः । ॐ उदीच्यै दिशे नमः । ॐ कुबेराय नमः । ॐ ऐशान्यै दिशे नमः । ॐ ईशानाय नमः । ॐ ऊर्ध्वायै दिशे नमः । ॐ ब्रह्मणे नमः ।

ॐ अधोदिशे नमः । ॐ अनन्ताय नमः । तत उपविश्य नमेत्-
ॐ ब्रह्मणे नमः । ॐ अग्नये नमः । ॐ पृथिव्यै नमः । ॐ ओषधीभ्यो नमः ।
ॐ वाचे नमः । ॐ वाचस्पतये नमः । ॐ विष्णवे नमः । ॐ महद्भ्यो नमः ।
ॐ अद्भ्यो नमः । ॐ अपाम्पतये नमः । ॐ वरुणाय नमः ।

## *जलावर्तनम्*

**ॐ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा स ँ शिवेन । त्वष्टा सुदत्रो विदधातु रायोनु मार्ष्टुतन्वो यद्विलिष्टम् ।**

इति मन्त्रेण मुखमभिमृश्य

## *चक्षुःस्पर्शः*

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येमशरदः शतञ्जीवेमशरदः शत ँ शृणुयामशरदः शतम्प्रब्रवामशरदः शतम( दीनाः स्यामशरदः शतम्भूयश्चशरदः शतात् ॥**

इति मन्त्रेणानामिकाङ्गुष्ठाभ्यां जलं स्पृष्ट्वा चक्षुःस्पर्शः कार्यः ।

## *पितृविसर्जनम्*

**ॐ देवागातुविदो गातुं वित्त्वा गातुमित ।**
**मनसस्पतऽइमन्देवयज्ञ ँ स्वाहा वाते धाः ॥**

इति तर्पणं विधाय ततः आचम्य प्राणानायम्य संकल्पं कुर्यात्

हरिः ॐ तत्सत् इति पूर्वोच्चारितसंकल्पसिद्धिरस्तु अद्य ममास्माकं वा श्रौतस्मार्तकर्मानुष्ठानपूर्वकब्रह्मवर्चोऽभिवृद्धये साद्गुण्यतावाप्तये वा श्रौतविधिना निर्माणाभिमन्त्रणपूर्वकं नित्यनैमित्तिककर्मोपाकर्म च कर्तुं यज्ञोपवीतधारणमहं वयं वा करिष्ये करिष्यामहे ।

## *अथ यज्ञसूत्रत्रिगुणीकताङ्गीकरणम्*

इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः, विष्णुर्देवता, गायत्री छन्दः, यज्ञसूत्र त्रिगुणीकृताङ्गीकरणे विनियोगः ।

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपा ँ सुरे स्वाहा ॥**

## *तन्तुदेवतापूजनम्*

**तत्रादौ यज्ञोपवीतप्रक्षालनम्**

**ॐ आपो हिष्ठेति** तिसृणां सिन्धुद्वीपऋषिः आपो देवता गायत्री छन्दः यज्ञोपवीतप्रक्षालने विनियोगः ।

**ॐ आपो हि ष्ठा मयोभुवस्तानऽऊर्ज्जे दधातन। महे रणाय चक्षसे। ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ ॐ तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥**

यज्ञोपवीतानि प्रक्षाल्यानन्तरं गायत्रीमन्त्रैर्दशवारमभिमन्त्र्य-

## *तन्तुदेवतानामावाहनम्–*

प्रणवस्य ब्रह्माऋषिः, परमात्मादेवता, गायत्रीछन्दः, प्रथमतन्तौ ॐकारावाहने विनियोगः ।

**प्रथमतन्तौ ॐकारमावाहयामि ।**

अग्निन्दूतमिति मेधातिथिर्ऋषिः, अग्निर्देवता, गायत्री छन्दः द्वितीयतन्तौ अग्न्यावाहने विनियोगः ।

**ॐ अग्निन्दूतं पुरोदधे हव्यवाहमुपब्रुवे ।**
**देवाँ २ आसादयादिह ॥ द्वितीयतन्तौ अग्निमावाहयामि ।**

**नमोऽस्तु सर्पेभ्यो** इत्यस्य प्रजापतिर्ऋषिः सर्पा देवताः अनुष्टुप् छन्दः, तृतीयतन्तौ सर्पावाहने विनियोगः ।

**ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवितेभ्यः सर्पेभ्यो नमः । तृतीयतन्तौ सर्पानावाहयामि ॥**

वय ఄ सोमेत्यस्य बन्धुर्ऋषिः, सोमो देवता, गायत्री छन्दः, चतुर्थतन्तौ सोमावाहने विनियोगः ।

**ॐ वय ఄ सोम व्रते तव मनस्तनूषु बिभ्रतः ।**
**प्रजावन्तः सचेमहि । चतुर्थतन्तौ सोममावाहयामि ।**

उदीरतामित्यस्य शङ्ख ऋषिः, पितरो देवता, त्रिष्टुप् छन्दः, पञ्चमतन्तौ पित्रावाहने विनियोगः ।

**ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः ।**
**असुं यऽईयुरवृकाऽऋतज्ञास्ते नोवन्तु पितरो हवेषु ॥**
**पञ्चमतन्तौ पितॄन् आवाहयामि ॥**

प्रजापतेरित्यस्य हिरण्यगर्भ ऋषिः, प्रजापतिर्देवता, त्रिष्टुप् छन्दः,

षष्ठतन्तौ प्रजापत्यावाहने विनियोगः ।

**ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव ।**
**यत्कामास्ते जुहुमस्तन्नोऽअस्तु वय ँ स्याम पतयो रयीणाम् ॥**

षष्ठतन्तौ प्रजापतये नमः प्रजापतिमावाहयामि ।

आ नो नियुद्भिरित्यस्य वसिष्ठ ऋषिः, अनलो देवता, त्रिष्टुप् छन्दः,
**सप्तमतन्तौ अनलमावाहयामि ।**

**ॐ आनो नियुद्भिः शतिनीभिरद्ध्वर ँ सहस्रिणीभिरुपयामि यज्ञम्।**
**वायोऽअस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥**

सप्तमतन्तौ अनिलाय नमः । अनिलमावाहयामि ॥

सुगाव इत्यस्यात्रिर्ऋषिः, गृहपयो देवता, आर्षी त्रिष्टुप् छन्दः, अष्टमतन्तौ यमावाहने विनियोगः ।

**ॐ सुगावो देवाः सदनाऽअकर्म यऽआजग्मेद ँ सवनञ्जुषाणाः ।**
**भरमाणा वहमाना हवी ँ ष्यस्मे धत्त वसवो वसूनि स्वाहा ॥**

**अष्टमतन्तौ यमाय नमः । यममावाहयामि ।**

विश्वेदेवासऽआगत इत्यस्य मधुच्छन्दा ऋषिः, विश्वेदेवा देवता, त्रिष्टुप् छन्दः, नवमतन्तौ विश्वेषां देवानामावाहने विनियोगः ।

**ॐ विश्वेदेवासऽआगत श्रृणुतामऽइम ँ हवम् । एदम्बर्हिर्निषीदत ।**
**नवमतन्तौ विश्वेभ्यो देवेभ्यो नमः विश्वान् देवान् आवाहयामि ॥**

## *अथग्रन्थिदेवताऽऽवाहनम्*

ब्रह्मयज्ञानमित्यस्य प्रजापतिर्ऋषिः, ब्रह्मा देवता, गायत्री छन्दः, गन्थिमध्ये ब्रह्मावाहने विनियोगः ।

**ॐ ब्रह्मायज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः ।**
**सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥**

ॐ ब्रह्मणे नमः । यज्ञोपवीतग्रन्थिमध्ये ब्रह्माणमावाहयामि ।

इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः, विष्णुर्देवता, गायत्री छन्दः, ग्रन्थिमध्ये विष्ण्वावाहने विनियोगः ।

**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपा ँ सुरे स्वाहा ॥**

ॐ विष्णवे नमः । यज्ञोपवीतग्रन्थिमध्ये विष्णुमावाहयामि ।

त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः, रुद्रो देवता, विराट् ब्राह्मी त्रिष्टुप् छन्दः, ग्रन्थिमध्ये रुद्रावाहने विनियोगः ।

**ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्धनम् ।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥**

ॐ रूद्राय नमः । यज्ञोपवीतग्रन्थिमध्ये रूद्रमावाहयामि ।
यज्ञोपवीतग्रन्थिदेवताभ्यो नमः, ग्रन्थिदेवता आवाहयामि ॥
प्रणवाद्यावाहिता देवताभ्यो नमः, यथास्थानमहं न्यासामि ॥
मानसोपचारैः सम्पूज्यं ध्यानम्–

**ॐ प्रजापतेर्यत् सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम् ।**
**ब्रह्मत्वसिद्ध्यै च यशः प्रकाशं जपस्य सिद्धिं कुरु ब्रह्मसूत्रम् ॥**

**ॐ युवा सुवासा परिवीतऽआगात्सऽउश्रेयान् भवति जायमानः ॥ तन्धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥** इति ध्यात्वा

## *आरार्तिक्यम्*

पञ्चवर्तिकां तत ऊर्ध्वं यथाशक्तिसंख्याकां वर्तिकां प्रज्वाल्य सम्पूज्य तां हस्ताभ्यां गृहीत्वा –

**हरिः ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥**

सप्तर्षीणामृषिप्रवराणां, सारून्धतीनां कश्यपादीनाम् अन्येषाश्चैवर्षि-प्रवराणामारार्तिक्यं करोम्यहं चात्र ॥

**गणपत्यादिपञ्चदेवानां शक्तिमहेशविष्णुसूर्याणाम् ।**
**कलये भक्तिं श्रद्दधानो वास्तोष्पतिभूम्यन्नपूर्णानाम् ॥**
**सच्चिदानन्दरूपाणां धर्मार्थकाममोक्षदातृणाम् ।**
**कालानामपि कालरूपाणां भयदानाभयदानानाञ्च ॥**
**सृष्टिस्थितिप्रलयङ्कारिणां त्रिशक्तिरूपाणां महेशानाम् ।**
**समर्पये आरार्तिक्यञ्चात्र मायिनामपि मायाधीशानाम् ॥**
**महदाद्याखिलभूरादीनां व्यक्ताव्यक्तानां सृष्टितत्त्वानाम् ।**
**आब्रह्मस्तम्बपर्यन्तानां वै ग्रहज्योतिषामन्तश्चर्याणाम् ॥**

गृहभातृलक्ष्मीनां देवानां कुलपितृणामिष्टदेवानाम् ।
मातृणां गणदेवानाञ्चात्र स्वभूर्पाताललोकमन्त्रीणाम् ॥
देवानां गन्धर्वाप्सरसां वै सिद्धानां यक्षरक्षसाञ्चात्र ।
स्मृतिकाव्यादिशास्त्रपुञ्जानां भक्तिज्ञानविरागकुञ्जानाम् ॥
भक्त्या करवाणि स्वारार्तिक्यं श्रद्धया च सर्वेषां यज्ञेऽसि ।
शश्वद्भवन्तो तुष्टिं यान्तु सर्वे नित्यं सर्वत्र मां पान्तु ॥
परार्द्धकल्पमन्वन्तराणां युगवर्षार्तुमासानाम् ।
पक्षसप्ताहाहोरात्राणूनां यामपरमाणुपर्यन्तानाम् ॥
योगानां वारतिथीनां येषां सर्वेषां राशीनां नक्षत्राणाम् ।
सर्वेषां वनौषधीरुधां द्यावाभूम्यन्तरसर्वदिशाम् ॥
मन्त्राणां व्याहृतिपूर्वाणां सप्तर्णवानां न्यासपूर्वाणाम् ।
वर्गचतुष्टयानां सर्वेषां तेषां धर्मार्थकाममोक्षाणाम् ॥
विद्यानामष्टादशसंख्यानां सिद्धीनांञ्च तावती संख्यानाम् ।
वेदानां येषां सषडङ्गानां तेषामृग्यजुषाथर्वाणाम् ॥
ब्रह्मसूक्तीयतत्त्वपराणां रक्षाबन्धनवर्मसूत्राणाम् ।
द्विपञ्चाशन्मितसंख्यकानां शब्दब्रह्ममयानां मातृणाम् ॥
चित्प्राणज्ञानक्रियाशक्तीनां सदुपनिषद् ब्रह्मविद्यानाम् ॥
सर्वेषामारार्तिक्यं करवै श्रद्धाभक्तिसमन्वितोऽहं वै ॥
गरूडादीनां पक्षिवराणामष्टापदपञ्चाश्यधृष्टीनाम् ।
गोगजोष्ट्रानां कृष्णमृगाणां दिग्वारणेन्द्रतुरगानाम् ॥
सतिसरसां प्रस्रवणानां वन्यारण्यानां गिरिदुर्गाणाम् ।
महासागरद्वीपवर्षाणामरूधन्वानां सोपद्वीपानाम् ॥
लोकालोकादिश्चेतद्वीपानां मणिद्वीपाधिष्ठातृशक्तीनाम् ॥
सत्तीर्थानां सत्पुण्यक्षेत्राणां सज्ज्ञानविष्णसद्भक्तीनाम् ॥
गर्भाधानान्मृत्युपर्यन्तानां वैदिकावैदिकसंस्काराणाम् ।
देवेज्यातोनजगुणान् यावद्द्विजातीनां योग्यसंस्काराणाम् ॥
श्रद्धाभक्त्यर्चिततृप्ता यूयं प्रसीदत मोदत सततम् ।

क्षेमं वितनुतान्न हे देवानुदतायं ज्ञानाज्ञानजं मे ॥
एवं विंशतिकाभिः स्तुतिभिर्यास्तौति चारार्तिक्यं कुरूते।
स सर्वविजयी भूत्वा नित्यं सर्वत्रात्मनो यशस्तनुते ॥

इत्यारार्तिक्यं कृत्वा प्रदक्षिणां विदध्यात् ।

## *प्रदक्षिणा–*

यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्तु प्रदक्षिणपदे पदे ॥

**ॐ सप्तास्यासन् परिधयस्त्रिः सप्तसमिधः कृताः । देवायद्यज्ञं तन्वानाँ अबध्नन् पुरूषं पशुम् ।**

**ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणि प्रधमान्यासन् । तेनाहकम्महिमानः सचन्तयत्रपूर्वे साध्याः सन्तिदेवाः ।**

ॐ सारून्धतिकश्यपादि सप्तर्षिसहितेभ्यः सर्वेभ्यो देवेभ्य ऋषिभ्यः सर्वेभ्यः स्थापिततर्पिततत्त्वेभ्यो नमः

## *अथ मन्त्रपुष्पादिसहितप्रार्थना–*

पुष्पादिकमञ्जलौ गृहीत्वा–

**ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणि प्रधमान्यासन् । तेनाहकम्महिमानः सचन्तयत्रपूर्वे साध्याः सन्तिदेवाः ॥** ॐ स्वस्तिः ॥

सच्चिद्रूपसनातनौ हरिहरावाग्निर्महेन्द्रोऽनिलः ।
सुर्याचन्द्रमसौ धनेशवरुणौ जीवेशधर्मौ ग्रहाः ॥
अत्रिः सिद्धिविनायकौ धनदजौ विद्युन्नभोमण्डलं,
सेनानीः सुरपादपोऽम्बुनिधयः कुर्वन्तु नो मङ्गलम् ॥१॥
सावित्री सुरभिश्च कौस्तुभमणिश्चैरावतोऽरुन्धती ।
गौरी श्रीकमला शुभा वसुमती सङ्कर्षणो गोमती ॥
स्वाहा देवधुनी समीनभकरा श्रीज्योतिषां मण्डलम् ।
बेला वारिनिधेर्विदर्भतनया कुर्वन्तु नो मङ्गलम् ॥२॥
साम्बो जाम्बबती कलिन्दतनया श्रीभारती नर्मदा

सिप्रासिन्धुरिरावती पशुपतिर्गोदावरी शर्मदा ।
फल्गू वेत्रवती महेन्द्रतनया रम्यं भुवो मण्डलम् ।
काबेरी सरयूर्मही शिवजला कुर्वन्तु नो मङ्गलम् ॥३॥
मान्धाता च शिविर्दिलीपनहुषौ वैन्यः ऋतुः कर्मदा
वाल्मीकिर्नहुषात्मजः शिवधनुर्व्यासो बलिः शारदा ।
जाबालिः सनकः सनन्दन इलापुत्रश्च दिङ्मण्डलं
सप्ताश्वा जमदग्निकश्यपगयाः कुर्वन्तु नो मङ्गलम् ॥४॥
गाङ्गेयो नलकच्छपाण्डुतनया धन्वन्तरिर्देवलो-
विश्वामित्रवशिष्ठरामनहुषा चर्मण्वती देविका ।
धौम्यो लोमशगर्गपाणिनिशरद्वांसो रसामण्डलं
प्रह्लादाङ्गिरसौ च धर्मतनयौ कुर्वन्तु नो मङ्गलम् ॥ ५॥
प्रद्युम्नो ह्यनिरूद्ध उद्धव उभौ द्वारावती शैलजा
माया मारूतिरन्तिदेवकपिला योध्यापुरी कर्दमाः ।
शान्तिर्गौतमरामकाव्यपुरूषाः काञ्ची सुपुण्यस्थलं
कौण्डिन्यक्रतुगालवाश्च सततं कुर्वन्तु नो मङ्गलम् ॥६॥
मैत्रेयश्च्यवनो मकण्डुतनयो दाल्भ्यश्च लङ्कापुरी
गर्गो जैमिनिजाजली भृगुभरद्वाजौ धवन्ती पुरी ।
शाण्डिल्यो बृहतां पतिः कचशची श्रीसर्वतो मण्डलं
काव्यो वत्समृगीसुतत्रितबुधाः कुर्वन्तु नो मङ्गलम् ॥७॥
तापी वेत्रवती त्रिशूलतनया श्रीगण्डकी कौशिकी
कृष्णा शुक्लजलादधीचिमुमुचुः कात्यायनो देवकी ।
औवो मित्रपराशरौ पुलहदधौ वामदेवो ह्यल-
रामोऽगस्त्य सुधन्वरैभ्यमनवः कुर्वन्तु नो मङ्गलम् ॥८॥
वेण्या भीमरथी सुरेणुसुप्रभा भोगावती वञ्जुला
वाशिष्ठी प्रमदा च वक्रगमना वज्रा कुशावर्तिनी ।
ब्रह्मानन्दमयी च भूमितनया श्रीचन्द्रभागा ह्यलं
शोणा वै भवनाशिनी करजला कुर्वन्तु नो मङ्गलम् ॥९॥

सद्वृत्ता प्रवरा सुवर्णतनया सिन्धुर्विशोका यथा
कर्णाली कृतमालिकाघशमनी श्रीकाञ्चताक्षी तथा ।
चित्रा कश्यपनन्दिनी सितजला पापापहा या ह्यलं
नित्यञ्चोघवती विशालनयना कुर्वन्तु नो मङ्गलम् ॥१०॥
गन्धर्वाप्सरसश्च दिव्यपितरो वास्तोष्पतिर्मानवाः
सिद्धाः किन्नरयक्षराक्षसनगानागमृगा दानवाः ।
वैदेहो वडवानलो जनबलं राज्याङ्गभूतं बलं
विश्वेषामधिदेवताजनकजा कुर्वन्तु नो मङ्गलम् ॥११॥
गायत्री च सरस्वती शशिकला साध्यान्नपूर्णा सुधा ।
यज्ञा यज्ञपुरुषवेदपुरुषाः स्वाचारनिष्ठाः बुधाः ॥
खट्वाङ्गो रघुराघवौ दशरथो मेधातिथिर्ब'द्धयलं
बृद्धा बाणशतद्रुमा अहरहः कुर्वन्तु नो मङ्गलम् ॥१२॥
देवापिः शुकयाज्ञवल्क्यमधुराः पुण्या च काशिपुरी,
पुण्यं ब्रह्मकपालतीर्थममलं पुण्या विशाला पुरी ।
श्रीविघ्नेश्वरढुण्डिराजविपुला वृन्दावने निश्छलं
मुक्तिक्षेत्रममोघपुण्यसलिलं कुर्वन्तु नो मङ्गलम् ॥१३॥
भूरादीन्युपरिस्थितानि भुवनान्येकश्च सप्तैव चा-
धस्ताच्चोल्लसिनानि चैवमतलादीन्येव सप्तैव वै ।
तारासञ्ज्वलितानि वैद्युतिरूचं सन्धारितानि ह्यलं
ब्रह्माण्डे लसितानि भान्ति सततं कुर्वन्तु नो मङ्गलम् ॥१४॥
वैकुण्ठः शिवलोककृष्णनिलयौ श्रीशैशुमारालयं
श्वेतद्वीपपयोनिधी मणिमयद्वीपो महाशक्तिधीः ।
ऐन्द्रीपूरमरालकाधनपते यत्काननं नन्दनं
विश्रान्तिस्थलमीशितुः प्रलयिते कुर्वन्तु नो मङ्गलम् ॥१५॥
सौराष्ट्राङ्गकलिङ्गबङ्गमलयाः काश्मीरकर्णाटकौ
ग्रौडो मालवकेरलौ मगधनेपालान्ध्रपाञ्चालकाः ।
पाण्ड्यो मागधभोजचोलनिषधाः पानाटमत्स्यौ ह्यलं

काम्बोजः करहाटसिंहलकुशाः कुर्वन्तु नो मङ्गलम् ॥१६॥
बाह्लीको वरहाटकोङ्कणमहाराष्ट्राः कुरूः कोशलः
कैकेयश्चदशार्णवद्रविडकाम्बोजा विदर्भाङ्गजौ ।
गान्धारश्चललाटबर्बर विराट्खर्जारभद्रा ह्यलं
सौवीरो यवनश्च पारसिक ॐ कुर्वन्तु नो मङ्गलम् ॥१७॥
वाराहं तनुकौरवं सुविपुलं श्रेत्रञ्च वै रौरवं
धन्यञ्चैव तु नाकमस्तशिखरं नेपालभूगौरवम् ।
शैलामेरूमहेन्द्रमत्स्यधवलाः शैलोऽन्नपूर्णो ह्यलं
क्रौञ्चो मन्दरनीलकूठमलयाः कुर्वन्तु नो मङ्गलम् ॥१८॥
श्रीशैलारूणचित्रकूटहिमवत्कालञ्जराः पर्वताः
कैलाशो हिमकूटविन्ध्यधरणी मैनाक हेमाचल ।
तीर्थाख्यो ननु गन्धमादन इति ख्यातः समृद्धावलं
वैशम्पायनपिप्पलादभरताः कुर्वन्तु नो मङ्गलम् ॥१९॥
शङ्खः पञ्चजनोद्भवश्चकमलं कौमोदकी भर्झरी
चक्रं वै मुरमर्दनस्य च विधेर्गङ्गोदकी कर्करी ।
त्रेताग्निर्ऋतुपर्ण इन्द्रकमलं सद्ब्रह्मवर्चो बलं
प्राद्युम्निश्च पतञ्जलिः सुरमुनिः कुर्वन्तु नो मङ्गलम् ॥२०॥
आदित्या वसवश्च सप्तमरूतो ये चावहाद्याः सुराः
ये चैकादशरूद्रमूर्तय इमा गौर्यादयो मातरः ।
ये चेशाद्यधिदेवताः समहिताः प्रत्याधिदेवा ह्यलं
दिक्पालाश्च नवग्रहाः प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥२१॥
ये ग्रामस्थितदेवताः गृहप्रसूर्लक्ष्मीश्च गेहे स्थिताः
ये चैवात्मकुलायनाः शुभकराः स्वाभीष्टदेवास्तथा ।
ये वै पापहरा भयाऽभयकरास्तीर्थाधिदेवा ह्यलं
तीर्थानि व्रतराजइष्टवरदाः कुर्वन्तु नो मङ्गलम् ॥२२॥
व्यक्ताव्यक्तमहान्त्यहङ्कृतिमनोबुद्धीन्द्रियाणि क्रतु
भूतान्येव महान्ति पञ्च पृथिवी चापोऽग्निवायूवियत् ।

तन्मात्राणि च तानि देवसहितान्येवं विधानीत्यलं
मूर्ताऽमूर्तमयानि सृष्टिकरणे कुर्वन्तु नो मङ्गलम् ॥२३॥
स्थूलान्येव तु सुक्ष्मतानि च तथा यत्काराणान्येव हि
वर्ष्माण्येव तु देहिनां श्वसनिनां स्वाभाविका ये गुणाः ।
सत्त्वाद्याश्च रजस्तमः प्रकृतयो रूपाणि यानि ह्यलं
दृश्यन्ते जगदीशितुर्हि प्रतनौ कुर्वन्तु नो मङ्गलम् ॥२४॥
जाग्रत्स्वप्नसुषुप्तयस्तनुधियां दृश्यन्त एवानिशं
नूनं येऽनुभवन्त्यहो प्रतिदिनं यद्दुःखमिश्रं सुखम् ।
नो दद्यात्क्व च मां कदाऽप्यनुभवं द्वैतस्य यस्य ह्यलं
छित्वा संसृतिबन्धनञ्च कृपया कुर्वन्तु नो मङ्गलम् ॥२५॥
ये कालाः परमाणुतो ननु परार्धान्ता वहन्तोऽनिशं
ते मन्वन्तरकल्पवत्सरयुगात्मानः परार्धान्तिमः ।
मासर्तुर्ह्ययनञ्च पक्षतिथयोऽहोरात्ररूपा ह्यलं
यामाद्याः परमाणवः प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥२६॥
भूश्चैव भुवः स्वरेवतु महश्चैव जनो वै तपः
सत्यं वाहृतयो महत्य इति माः पूज्याश्च तार्षयः ।
साधिष्ठातृसुराश्च वेदजननी भूर्त्यो त्रिधाया ह्यलं
शक्तिर्या त्रिविधा भवन्तु वरदाः कुर्वन्तु नो मङ्गलम् ॥२७॥
सामाथर्वऋचो यजुंषि मनवो वेदप्रसो यो मनु
श्चण्ड्याश्चैव नवार्णकः पशुपतेर्यौपञ्चषार्णौ मनू ।
मन्त्रौ वर्णयुतौ तथा मुररिपोर्यो द्वादशाष्टौ ह्यलं
चण्डी सप्तशती च मन्त्रपुटिताः कुर्वन्तु नो मङ्गलम् ॥२८॥

इति निवेदयेत् ।

## *अथ यज्ञोपवीतधारणम्*

आचम्य प्राणानायम्य स्वाभिमन्त्रितयज्ञोपवीतपुञ्जाद्यज्ञोपवीतानि समुद्धृत्य हस्तेनादाय ॐ यज्ञोवीतमित्यस्य परमेष्ठीऋषिः लिङ्गाक्ता देवताः त्रिष्टुप् छन्दः यज्ञोपवीतधारणे विनियोगः ।

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यम्प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥
यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥

इति मन्त्रेण यज्ञोपवीतानां पृथग्पृथग्धारणं कुर्यात् । नवयज्ञोपवीतधारणान्ते जीर्णयज्ञोपवीतस्त्यागस्तत्र मन्त्रः–

ॐ एतावद्दिनपर्यन्तं ब्रह्मत्वं धारितं मया ।
जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥

इति मन्त्रेण जीर्णसूत्रं शिरोमार्गेण निःसार्य शुद्धभूमौ त्यजेत् ॥

ततो दशसंख्याधिकं यथाशक्तिसंख्याकं(अष्टोत्तरशतसंख्याकं) तदर्धं तदर्धं वा गायत्रीजपं कृत्वा समर्पणं कुर्याद्यथा–

अनेन नवयज्ञोपवीतधारणार्थे कृतेन यथाशक्तिगायत्रीजपकर्मणा श्रीसवितादेवता प्रीयतां न मम । ॐ तत्सत् ब्रह्मार्पणमस्तु । ततः उपाध्यायः(गुरुः) शिष्याश्च मिलित्वाचम्य प्राणानायम्य विधिवदुपाकर्म (वेदाध्यापनाध्यायनकर्म) कुर्युः ।

## *अथोत्तराङ्गपूजनम्*

ॐ नमो नमो वो देवेभ्यः सर्वेभ्यः प्रणामाम्यमहम् ।
भूयो भूयो नमस्यामि स्वात्मानञ्च निवेदये ॥१॥
ध्यानमावाहनञ्चैव पाद्यार्घ्याचमनीयकम् ।
स्नानीयं पञ्चधास्नानं पञ्चामृतरसादिभिः ॥२॥
पुनराचमनं पञ्च चन्दनाक्षतकुङ्कुमान् ।
पुष्पाणि ब्रह्मसूत्राणि वस्त्राणि च फलानि च ॥३॥
धूपदीपादिमाल्यानि वासयोग्याधिवासनम् ।
प्रदक्षिणा दक्षिणा च पूर्वाङ्गे चोत्तराङ्गके ॥४॥
यथाशक्त्या यथाभक्त्या जानताऽजानता तथा ।
श्रद्धया विहितां पूजां गृह्णन्तु परमेश्वराः ॥५॥
सर्वतो ह्युररीकृत्य तुष्टाः भवन्तु सर्वथा ।
या न्यूना त्रुटिता वापि पूर्णा स्यात् परमेश्वराः ॥६॥

सच्चिदानन्दरूपा हे ब्रह्मविष्णुमहेश्वराः ।
महाव्याहृतयः साधिदेवाः सप्रणवर्षयः ॥७॥
ब्रह्मर्षयः सुरव्रातः देवर्षयो महर्षयः ।
ऋषयश्चेतरे सर्वे ब्रह्माद्यास्त्रिदिवौकसः ॥८॥
अव्यक्तमहादीनि जीवात्मानौ त्रिधा गुणाः ।
स्वाहा स्वधाधर्मधर्मौ चतुर्वर्गो हविर्दुघाः ॥९॥
दिव्यादिव्याश्च पितरो दिव्यादिव्यश्च मातरः ।
मानवाः दानवाः दैत्यास्तुष्टिमायान्तु सर्वथा ॥१०॥
सिद्धाः साध्याश्च मनवो गन्धर्वोरगराक्षसाः ।
पिशाचाः गुह्यकाः भूताः किन्नराप्सरसस्तथा ॥११॥
नागाः मृगाः खगाः खेटाः स्वर्भूँपातालचारिणः ।
कच्छपा मीनमकरा अण्डजाश्च जरायुजाः ॥१२॥
उद्भिज्जाः स्वेदजाः सर्वेऽदृष्टिगादृष्टिगोचराः ।
आब्रह्मस्तम्बपर्यन्ता जलस्थलनभश्चराः ॥१३॥
स्थावरा जङ्गमाः सर्वे जडचैतन्ययोनिजाः ।
सर्वतस्तृप्तिमायान्तु मद्दत्तयार्चयानया ॥१४॥
गृहग्रामाधिदेवाश्च वास्तुदेवाः कुलायनाः ।
इष्टदेवा गोष्ठदेवाः सर्वे तृप्यन्तु स्वर्चया ॥१५॥
भूमिदेवास्तीर्थदेवा यास्तपःपुण्यभूमयः ॥
द्विसप्तमितरत्नानि भुवनानि चतुर्दशः ॥१६॥
ब्रह्मसूत्रीयतत्त्वानि संबद्धानि च तैः सह ।
सर्वतस्तुष्टिमायान्तु प्रसीदन्तु च मां सदा ॥१७ ॥
श्रुतिस्मृतिपुराणानि सेतिहासानि यानि वै ।
सिद्धयोऽष्टौ महाविद्या अष्टादशमिचाश्च याः ॥१८॥
रामायणं रामयशो भारतं भरतान्वयम् ।
सर्वोपनिषदो गावस्त्रेता धर्मः सनातनः ॥१९॥
ओषध्यश्च निर्झराश्च गिरयश्च नदी नदाः ।

स्रोतःसरांसि तीर्थानि ये पातालस्पृशो ह्रदाः ॥२०॥
आर्यावर्तीयदेशा ये सर्वद्विपोपसागराः ।
सङ्गमा भङ्गिमाः सर्वे नागरा देवनागराः ॥२१॥
गीता गङ्गा च गायत्री सावित्री च सरस्वती ।
कावेरी यमुना सिप्रा नर्मदा सिन्धुगोमती ॥२२॥
धर्मधारा यशोधारा विश्वधारा सितप्रभाः ।
रत्नधारा सुवर्णभा कृष्णाभाश्चेति सप्तकाः ॥२३॥
सीता चालकानन्दा च चक्षुर्मन्दाकिनी तथा ।
भद्रा मही च सरयुः स्वर्णरेखा तु कर्मदा ॥२४॥
चन्द्रभागा तुङ्गभद्रा पयोष्णी चित्रकाक्षपी ।
फल्गू पुनः पुनश्चैव वाशिष्ठी प्रमदा प्रभा ॥२५॥
अन्या भारतवर्षीया या याः सन्ति सरिद्वराः ।
ताः सर्वाः तृप्तिमायान्तु तर्पणेन समर्चयाः ॥२६॥
परमाणोपरार्धान्ताः कालाः कालांशकास्तथा ।
योगः करणतिथयोः वाराः नक्षत्रराशयः ॥२७॥
आवाहितार्चिता ये ये तर्पिताश्च मखे मया ।
पूर्वञ्च भक्तिश्रद्धाभ्यां मधुनापि समर्चयेत् ॥२८॥
अर्चादावर्चनान्ते च संप्रहृष्टा भवन्तु याम् ।
पूजां गृहीत्वा प्रीत्या वै भवन्तः सम्भवन्तु वः ॥२९॥
भावयन्तु च मां नित्यमर्चया भावयाम्यहम् ।
भवतः श्रद्धया भक्त्या सर्वदा संस्मराम्यहम् ॥३०॥

इति उत्तराङ्गपूजा ।

## ***क्षमापनम्***

आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजां चैव न जानामि क्षमस्व परमेश्वर ॥
मन्त्रहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।

तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥
यदक्षरपदभ्रष्टं मात्राहीनं च यद् भवेत् ।
तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥

## अथ पूर्णपात्रदानम्

निकुञ्चकद्वया(मानका)दन्यूया तण्डुलपुर्णपात्रमग्रे निधाय फलपुष्प-वस्त्रयज्ञोपवीतद्रव्यसमन्वितं कृत्वा पूर्णादर्वीति पूर्णपात्रं ब्राह्मणञ्च त्रिः सम्पूज्य–

**ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत ।**
**वश्स्नेव विक्रीणावहाऽइहमूर्ज ँ शतक्रतो ॥**

हस्ते पूर्णपात्रं गृहीत्वा हरिः ॐ तत्सत् इति त्रिवारमुच्चार्य पूर्वसङ्कल्पसिद्धिरस्तु अद्येह आदौ यज्ञोपवीतधारणरक्षाबन्धनधारणनिमित्तक-कृतस्याब्रह्मादिस्तम्बपर्यन्तानां ब्रह्मर्षिदेवर्षिपितृभूतादिसकल-चराचराणां ब्रह्मसूत्रीयतत्त्वानां तदधिष्ठातृदेवानाञ्चावाहन-पूजनतर्पणाभिमन्त्रणपूर्वकं विशेषरूपेणऋषितर्पणयज्ञोपवीतसूत्रबन्धनोपाकर्मसाङ्गतासिद्धये तथा साद्गुण्यतावाप्तये चेदमपूर्णपूर्णपात्रमन्नं प्रजापतिदैवतं हिरण्यमग्निदैवतं रौप्यं चन्द्रदैवतं ताम्रमादित्यदैवतं पितरं कुजदैवतं कर्गदं बृहस्पतिदैवतं यद् यद् वस्तु तत्तद् दैवतममुकशर्मणे सुपूजिताय ब्राह्मणाय सम्प्रददे, तत्सन्न मम । इति ब्राह्मणाय समर्पयेत् । ततः कलशजलेनाभिषेचनम् ।
आम्रपल्लवादिसहितं कुशोदकं गृहीत्वा

**ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्ज्येन तेजसे ब्रह्मवर्चसायाधिषिञ्चामि । सरस्वत्यै भैषज्ज्येन वीर्यान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाया श्रियै यशसे भिषिञ्जामि ॥**

**ॐ कोऽसि कतमोऽसि कस्मै त्वा कायत्वा । सुश्लोकसुमङ्गलसत्यराजन् । ॐ द्यौः शान्तिरन्तरिक्ष ँ शान्ति पृथिवी शान्तिरापः शान्तिरो षधयः शान्तिः वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिब्रह्मशान्तिः सर्व ँ शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि ॥**

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम**

**शरदः शत ဳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् । इति गन्धाक्षतपुष्पादिभिः सूर्यमर्चयेत् ॥**

**ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्वेवेदाः ।**
**स्वस्तिनस्ताक्ष्र्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥**
**ॐ भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।**
**स्थिरैरङ्गैश्तुष्टुवा ဳ शस्तनुभिर्व्यशेम यदायुः ॥**
**ॐ विश्वानि देवसवितर्दुरितानि परासुव । यद्भद्रन्तन्न आसुव ॥**
**ॐ यथेमा वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्या ဳ शूद्राय चार्य्याय च स्वाय चारणाय च । प्रियो देवाना दक्षिणायै दातुरिहभूयासमयम्मे कामः समृद्ध्यतामुपमादो नमतु ॥**

इत्यभिषेचनं गृहीत्वा ततो भूयसीदक्षिणादानम् ।

पूर्णपात्रे हिरण्यादिदेयद्रव्याणि निधाय त्रिः सम्पूज्य कुशोदकमादाय हरिः ॐ तत्सत् इति त्रिरुच्चार्य पूर्वसङ्कल्पसिद्धिरस्तु अद्येह कृतस्य दीपगणेश-कलशस्कन्धादिदेवतापूजनपूर्वकं श्रावणीकर्माङ्गभूतोपाकर्मयज्ञोपवीत-रक्षाबन्धनाभिमन्त्रणार्थमाब्रह्मस्तम्बपर्यन्तानाञ्चराचराणां ब्रह्मसूत्रीयतत्त्वानां विशेषेण अरून्धतीसहितकश्यपादि-सप्तर्षीणामावाहनपूजनतर्पण-कर्मणस्तथा गायत्रीमन्त्रवेदपाठशान्तिकाध्यायपाठदुर्गासप्तशती-पाठादिकर्मणाञ्च साङ्गतासिद्धये इमां भूयसीदक्षिणां हिरण्यमग्निदैवतं रौप्यं चन्द्रदैवतं कर्गदं बृहस्पतिदैवतं यद् यद् वस्तु तत्तद् दैवतं यथायथा नामगोत्रेभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य दातुमहमुत्सृजे । इति यथाभागं विभज्य ब्राह्मणेभ्यो दद्यात् ।

## *अर्पणम्*

अद्य कृतेन श्रावणीकर्माङ्गभूतेन सप्तर्षिपूजनतर्पणोपाकर्म कर्तुं कृतेन साधिदेवानां ब्रह्मसूत्रीयतत्त्वानां आब्रह्मस्तम्बपर्यन्तानां देवाग्निनामावाहन-पूजनतर्पणाभिमन्त्रणाख्येन कर्मणा श्रीमत्परमेश्वर प्रीयतां न मम ॥

## *विसर्जनम्*

ॐ सङ्गच्छत सुरश्रेष्ठाः स्वस्थानं परमेश्वराः ।
स्वाधिष्ठानं यत्र यत्र तत्र तत्राधिगच्छत ॥

ततश्चन्दनाक्षतरक्षाबन्धनपात्रे निधाय हस्ते गृहीत्वा स्वस्तिवाचनं कुर्यात्। यथा -

**हरिः ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्टङे राजन्यः शूर इषव्योऽतिव्याधि महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायनान्निकामे निकामे नः पर्जन्योऽवर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥**

## *ततो रक्षाबन्धनधारणम्*

**ॐ येन बद्धो बली राजा दानवेन्द्रो महाबलः ।**
**तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥**

इति रक्षाबन्धनसूत्रं सन्धार्य पुष्पाक्षतादिसहितं तिलकप्रसादञ्च धारणं विधाय मङ्गलाचारपूर्वं यथा यथा स्वाधिष्ठानं गच्छेयुः ।

*॥ इति श्रावणीकर्माङ्गभूतर्षितर्पणी समाप्ता ॥*

## *हेमाद्रिकृतस्नानमहासङ्कल्पः*

तत्रादौ हस्तौ पादौ प्रक्षाल्याचम्य प्राणायामं कृत्वा कुशोदकमादाय हरिः ॐ स्वस्ति श्रीमुकुन्दसच्चिदानन्दस्य ब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृम्भिता विद्यायोगात् कालकर्मस्वभावाविर्भूतमहत्तत्त्वोदिताहङ्कारोद्भूतवियदादि-पञ्चमहाभूतेन्द्रियदेवतानिर्मितेण्डकटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्ति भगवतः श्रीमन्नारायणस्य नाभिकमलोद्भूतसकललोकपितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धरणाय प्रजापतिप्रार्थितस्य समस्तजगदुत्पत्तिलय-कारणस्य जगद्रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातस्य अच्युतानन्तवीर्यस्य श्रीमद्भगवतो महापुरुषस्य अचिन्त्यापरिमितशक्त्याधेयमानस्य महाजलोघ-मध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽव्यक्त-महदहङ्कारपृथि-व्यप्तेजोवाय्व्याकाशाद्यावरणैरावृतेऽस्मिन् महति ब्रह्माण्डखण्डे आधारशक्तिः श्रीमदादिवाराहद्रष्ट्राग्रविराजिते कूर्मानन्तवासुकितक्षककुलिककर्कोटकपद्म-महापद्मशङ्खाद्यष्टमहानागैर्धृयमाणे ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्त-सार्वभौमसुप्रतीकाष्टदिग्गजप्रतिष्ठितानामतलवितलसुतलतलातलरसातल-पाताललोकानामुपरिभागे भुर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपो-

लोकसत्यलोकाख्या सप्तलोकानामधोभागे चक्रवालशैलमहावलयानां मध्यवर्तिनो महाकालमहाफणिराजशेषस्य सहस्रफणानां मणिमण्डलमण्डिते दिग्दन्तिशुण्डोनाम्बिते अमरावत्यशोकवतीभोगवतीसिद्धवतीगान्धर्ववती-काञ्चवन्त्यलकावतीति पुण्यपुरीप्रतिष्ठिते इन्द्राग्नियमनिर्ऋतिवरूणवायु-कुबेरेशानाष्टदिक्पालप्रतिष्ठिते वरध्रुवावरसोमपाप्रभञ्जनानलप्रत्यूषप्रभासा-ख्याष्टवसुभिर्विराजिते हरत्र्यम्बकरुद्रमृगव्याधापराजितकपालिमैखशम्भुकपर्दि-वृषाकपिवटुरूपाख्यैकादशरुद्रैः संशोभितैः रुद्रोपेन्द्रसवितृधातृस्वष्टर्यमेन्द्रोयान-भर्गमिवपूषाख्यद्वादशादित्यप्रकासिते यमनियममासन-प्राणायामप्रत्याहार-धारणाध्यानं समाध्यष्टाङ्गनिरतवसिष्ठबालखिल्यविश्वामित्रदक्ष्यकात्यायन-कौडिन्यगौत-माङ्गिरसपाराशर्यव्यास-वाल्मीकिशुकशौनकभारद्वाजसनक-सनन्दनसनातनसनत्कुमारनारदादिमुख्यमुनिभिः पवित्रिते लोकालोकाचल-वलयितेलवणेक्षुरसुरासर्पिर्दधिक्षीरोद-कयुक्तसप्तार्णवपरिवृतेजम्बूप्लक्षशाल्मलि-कुशक्रौञ्चशाकपुष्कराख्यसप्तद्वीपयुते इन्द्रकांश्यताम्रगभस्तिनागसौम्य-गन्धर्वचारणभारतेति नवखण्डमण्डिते सुवर्णगिरिकर्णिकोपेतमहासरोरूहाकार पञ्चाशत्कोटियोजनविस्तीर्णभूमण्डले अयोध्यामधुरामायाकाशीक्राञ्च्यवन्तिका-द्वारावतीति सप्तपुरीप्रतिष्ठिते महामुक्तिप्रदस्थले शालग्रामशम्भलनन्दिग्रामेति ग्रामत्रयविराजिते चम्पकारण्यबदरिकाख्यदण्डकाख्यार्बुदारण्यधर्मारण्यपद्मारण्य-गुह्यारण्यजम्बूकारण्यविन्ध्यारण्यद्राक्षारण्यनहुषारण्यकाम्यकारण्यद्वैताख्यनैमिषा-रण्यादीनां मध्ये सुमेरूविषधकूटशुभ्रकुटश्रीकूटहेमकूटरजतकूटचित्रकूट-त्रिकूटकिष्किन्धश्वेताद्रिकूटहिमावन्ध्याचलानां हरिवर्षकिम्पुरुषवर्षयोश्च दक्षिणे नवसहस्रयोजनविस्तीणैर्भरतखण्डे मलयाचलसन्ध्याचलविन्ध्या-चलानामन्तरेण स्वर्णप्रस्थचन्द्रप्रस्थसूक्तिकावस्तकटभणकपाञ्चजन्य-सिंहललङ्काशोकवत्यलङ्कावतीसिद्धवतीगान्धर्ववत्यादिपुष्पपुरीविराजिते नव-खण्डोपद्वीपमण्डिते दक्षिणावस्थित-रेणूका-द्वयसूकराकाशीकाञ्चीकालिकालवटेश्वर-कालञ्जरमहाकालेति नवोखटयुते द्वादशज्योर्तिर्लिङ्गगङ्गागोदानवसिप्रायमुना-सरस्वतीनर्मदालापीपयोष्णीचन्द्रभागाकाबेरीमन्दाकिनीप्रवराकृष्णावेण्याभीम-रथीतुङ्गभद्रामलापहाकृतमालाताम्रपर्णीविशालाक्षीवञ्जुचर्मण्वतीवेत्रवतीभोगावती-विशोकाकौशिकीगण्डकीवाशिष्ठीप्रमदाविश्वामित्रीफल्गुनीचित्रकाश्यपी-सरयूसर्वपापहारिणीकरतोयाप्रणीतावज्रावक्रगामिनीसुवर्णरेखास्वर्णाभवनाशिनी-शीघ्रगाकुशवर्तिनीब्रह्मानन्दामयितनयाद्यनेकनदिभिर्विलसितेब्रह्मपुत्रसिन्धुनदादि-परमपवित्रजलविराजिते हिमवन्मेरूगोवर्धनक्रौञ्चचित्रकूटहेमकूटमहेन्द्र-

मलयसह्येन्द्रकील-पारियात्राद्यनेकपर्वसमन्विते अङ्गवङ्गकलिङ्गकाश्मीर-काम्बोजसौवीरसौराष्ट्रमहाराष्ट्रमगधनेपालकेरलचोल-पाञ्चालगौडमालव-मलयसिंहलद्रविडकर्णाटकललाटकरहाटपानाटपाण्डचनिषदमागधान्ध्रदशार्णव-भोजकुरूगान्धारविदर्भविधेयबाह्लीकबर्बरकैकेयकोसलविराटसुरसेनकोङ्कण-कैकटमत्स्यभद्रपारशिकखर्जुरयावनम्लेच्छजालन्धरेति सिद्धवत्यन्नदेशविशेष-भाषाभूमिपालविचित्रिते ईलावृतकुरूभद्राश्वकेतुमालकिम्पुरुषरमणकहिरण्यादि-नववर्षाणां मध्ये भारतखण्डे बकुलचम्पकपाटलाब्जपुन्नागजातिकरवीर-रसालकह्लारकेतक्यादिनानाविधकुसुमस्तवकविराजिते कोकन्तहिरण्यश्रृङ्गकुब्जा-र्बुदमणिकर्णोवटशालग्राम-सूकरमथुरागयानिष्क्रमणलोहार्गलपोतस्वामी-प्रभासबदरीति चतुर्दशगुह्यविलसिते जम्बूद्वीपे कुरूक्षेत्रादिसमभूमध्यरेखायाः पश्चिमदिग्भागे कुलमेरोर्दक्षिणदिग्भागे विन्ध्यस्य दक्षिणदेशे श्रीशैलस्य वायव्यदेशे कृष्णावेण्योर्मध्यदेशे मत्स्यकूर्मवराहनृसिंहवामनपरशुरामरामकृष्ण-बुद्धकल्कीति दशावताराणां मध्ये बौद्धावतारे गङ्गादिसरिद्भिः पाविते एवं नवसहस्रयोजनविस्तीर्णभारतवर्षे निखिलजनपावनपरमभागवतोत्तमशौनकादि-निवासिते नैमिषारण्ये आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे सूर्यान्वयभूभृत्प्रतिष्ठिते श्रीमन्नारायणनाभिकमलोद्भुतसकलजगत्स्रष्टुः परार्धद्वयजीविनो ब्रह्मणो द्वितीयपरार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नोर्द्वितीये यामे तृतीये मुहूर्ते रथन्तरादिद्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवराहकल्पे स्वायम्भुवादिमन्वन्तराणां मध्ये सप्ते वैवस्वतमन्वन्तरे कृतत्रेतद्वापरकलि-संज्ञकानां चतुर्णां युगानां मध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तस्य प्रथमे चरणे श्रीमन्नृपविक्रमार्कात् श्रीमन्नृपशालीवाहनाद् वा यथा-सङ्ख्यागमेनचन्द्रसावनसौरनाक्षत्रादिप्रकारेणागतानां प्रभवादिषष्ठीसम्वत्सराणां मध्ये अमुकनाम्नि संवत्सरे उत्तरगोलावलम्बिनीश्रीमार्तण्डमण्डले अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षेत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते चन्द्रमसि अमुकराशिस्थिते देवगुरौ अन्येषु शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रप्रवरान्वितोऽमुकवेदशाखाध्यायी अमुकनामशर्माहं ममात्मन इह जन्मनि जन्मान्तरे वा बाल्ययौवनवार्धक्यावस्थासु वाक्पाणिपाद-पायूपस्थपानरसनाचक्षुस्पर्शनश्रोत्रमनोभिश्चरितज्ञाताज्ञात-कामाकाममहा-पातकोपपातकादिसञ्चितानां पापानां ब्रह्महननसुरापानसुवर्णस्तेयगुरु-तल्पगमनतत्संसर्गरूपमहापातकानां बुद्धिपूर्वकाणां मनोवाक्कायकृतानां

बहुकालाभ्यस्तानामुपपातकानाञ्च स्पृष्टास्पृष्टसंकरीकरणमलिनीकरणा-पातृकरणजातिभ्रंसकरणविहिताकरणकर्मलोपजनितानां रसविक्रयकन्याविक्रय-हयविक्रयगोविक्रयखरोष्ट्रविक्रयदासीविक्रयाजादिपशुविक्रयस्थलचरादिविक्रय-खेचरादिविक्रयसम्भूतानां निरर्थकवृक्षच्छेदनऋणानपाकरणब्रह्मस्वापहरणराजस्वा-पहरणपरद्रव्यापहरणतैलादिद्रव्यापहरणफलादिहरणलोहादिहरणनाना-वस्तुहरणरूपाणां ब्राह्मणनिन्दागुरुनिन्दावेदनिन्दाशास्त्रनिन्दापरनिन्दाभक्ष्यभक्ष्यणा-भोज्यभोजनाचोष्यचोषणालेह्यलेहनापेयपानास्पृश्यस्पर्शनाश्राव्यश्रवणहिंस्य-हिंसनावन्द्यवन्दनाचिन्त्यचिन्तनायाज्ययाजनापूज्यपूजनरूपाणां मातृपितृ-तिरस्कारस्त्रिपुरूषप्रीतिभेदनपरस्त्रीगमनविधवागमनवेश्यागमनदासीगमन-चाण्डालादिहीनजातिगमनगुदगमनरजस्वलागमनपश्वादिगमनरूपाणां कूटसाक्षित्वपशुन्यवादमिथ्यापवादम्लेच्छसंभाषणब्रह्मद्वेषकरणब्रह्मवृत्तिहरण-वृत्तिच्छेदनपरवृत्तिहरणरूपाणां मित्रवञ्चनगुरुवञ्चनस्वामीवञ्चनासत्यभाषण-गर्भपतनपथिताम्बूलचर्वणहीनजातिसेवनपरान्नभोजनगणान्नभोजन-लसुनपलाण्डुगृञ्जनभक्ष्यणतालवृक्षफलभक्ष्यणोच्छिष्टभोजनमार्जारोच्छिष्ट-भक्ष्यणपर्युषितान्नभक्ष्यणरूपाणां पंक्तिभेदकरणभ्रूणहत्यापशुहिंसाबालहिंसाद्यनेक-हिंसोद्भूतानां शौचत्यागस्नानत्याग-सन्ध्यात्यागौपासनाग्नित्यागवैश्वदेवत्याग-रूपाणां निषिद्धाचरणकुग्रामवासब्रह्मद्रोहगुरुद्रोहपितृमातृद्रोहपरनिन्दात्म-स्तुतिदुष्टप्रतिग्रहदुर्जनसंसर्गरूपाणां गोयानवृषभयानमहिषीयानगदर्भयानोष्ट्रयाना-जयानभृत्याभरणस्वग्रामत्यागगोत्रत्यागकुलत्यागदुरस्थमन्त्रणविप्राशाभेदना-वन्दिताशीर्वादग्रहणपतितसम्भाषणरूपाणां पतितजनपंक्तिभोजनानर्हसंगम-वृथामनोरथादिपापानां तथा–

**महापापोपपापाभ्यां नानायोनिषु यत्कृतम् ।**
**बालभावेन यत्पापं क्षुत्तृडर्थे च यत्कृतम् ।**
**आत्मार्थं चैव यत्पापं परार्थे चैव यत्कृतम् ॥**
**तीर्थेषु चैव यत्पापं गुर्ववज्ञाकृतं च यत् ।**
**रागद्वेषादिजनितं कामक्रोधेन यत्कृतम् ॥**
**हिंसानिन्दादिजं पापं भेददृष्ट्या च यन्मया ।**
**देहाभिमानजं पापं सर्वदा यन्मया कृतम् ॥**
**भूतं भव्यञ्च यत्पापं भविष्यञ्चैव गौतमी ।**

शुष्कमार्द्रञ्च यत्पापं जानताजानता कृतम् ॥
महल्लघुञ्च यत्पापं तन्मे नाशय जाह्नवी ।
ब्रह्महा मद्यपाः स्तेयी तथैव गुरूतल्पगः ।
महापापानि चत्वारि तत्संसर्गी तु पञ्चमः ॥
अतिपातकमन्यच्च तन्न्यूनमुपपातकम् ।
गोवधोव्रात्यतास्तेयऋणानाञ्चानपक्रियाः ॥
अनाहिताग्नितापण्यविक्रयः परिवेदनम् ।
इन्धनार्थं द्रुमच्छेदः स्त्रीहिंसौषधिजीवनम् ॥
हिंसा मात्राविधानञ्च भृतकाध्यापनं तथा ।
प्रथमाश्रममारभ्य यत्किञ्चित् किल्विषं कृतम् ॥
कृमिकीटादिहननं यच्किञ्चित्प्राणिहिंसनम् ।
मातापित्रोरशुश्रूषा तद्वाक्याकरणन्तथा ॥
अपूज्यपूजनं चैव पूज्यानाञ्च व्यतिक्रमः ।
अनाश्रमस्थताग्न्यादिदेवाशुश्रूषणं तथा ॥
परकार्यापहरणं परद्रव्योपजीवनम् ।
ततोऽज्ञानकृतं वापि कायिकं वाचिकं तथा ॥
मानसं त्रिविधं पापं प्रायश्चित्तैरनाशितम् ।
तस्मादशेषं पापेभ्यः त्राहि त्रैलोक्यपावनि ॥
निष्पापोऽस्म्यधुना देवि प्रसादात्तव नान्यथा ।

स्त्रीणां विशेषः—

पाणिग्रहणमारभ्य स्वकर्मापरिपालनम् ।
इन्द्रियाभिरतिः पुंसु नाना योनिषु या भवेत् ॥
कृमिकीटादिहननं पंक्तिभेदादिकं तथा ।
स्पृष्टास्पृष्टमनाचारं मनसा दोषकल्पनम् ॥
तत्सर्वं नाशयेः क्षिप्रं गङ्गे त्वं पात्रयानया ।

इत्यादिप्रकीर्णपातकानामेतद्कालपर्यन्तं सञ्चितानां लघुस्थूलसूक्ष्माणाञ्च निःशेषपरिहारार्थं दशाचरान् दशापरान् आत्मना सहितान्येकविंशति-

पुरुषानुद्धर्तुं ब्रह्मलोकावधिपञ्चाशत्कोटियोजनविस्तीर्णेऽस्मिन्भूमण्डले सप्तर्षिमण्डलपर्यन्तं बालुकाभिः कृतवर्षसहस्रावसाने चैकैकबालुकापकर्षक्रमेण सर्वराश्यपकर्षसम्मितकालपर्यन्तं ब्रह्मलोके ब्रह्मसायुज्यताप्राप्त्यर्थं कुरुक्षेत्रादिसर्वतीर्थेषु स्थानपूर्वकं सहस्रगोदानजन्यफलप्राप्त्यर्थं तथा मम सकलपितृणामात्मनश्च विष्ण्वादिलोकप्राप्तये अधीतानामध्येष्यमाणाञ्चाध्यायानां स्थापनविच्छेदक्रोशघोषणदन्तविवृतिदुर्वतद्रुतोच्चारितवर्णानां पूर्वसवर्णानां गलोपलम्बितविवृतोच्चारितवर्णानां श्लिष्टास्पष्टवर्णविघटनादिभिः पठितानां श्रुतीनां यघातयामत्वं तत्परिहारार्थमष्टत्रिंशदनध्यायाध्ययने रथ्या संचरतः शूद्रस्य शृण्वतोऽध्ययने आत्मनोऽशुचित्वे अध्ययने अक्षरस्वरानुश्वारपदच्छेदकण्डिकाव्यञ्जनह्रश्वदीर्घप्लुतकण्ठतालुमूर्धन्यौष्ठ्यदन्त्यनासिकरेफजिह्वामूलीयोपध्पानीयोदात्तानुदात्तस्वरितादीनां व्यत्ययेनोच्चारे माधुर्याक्षरव्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं सर्वस्य सवीर्यत्वसम्पादनद्वारा यथावत्फलप्राप्त्यर्थं श्रीमत्परमेश्वरप्रीत्यर्थं देवब्राह्मणसवित्रीसूर्यनारायणसन्निधौ गङ्गाभागीरथ्याममुकनद्यां सरसि वान्यज्जलाशये वा प्रवाहाभिमुखः पूर्वाभिमुख उत्तराभिमुखो वा स्नानमहं करिष्ये इति सङ्कल्प्य विधिना स्नायात् ॥

**—समाप्तोऽयं ग्रन्थः—**